जनीनविवादपदनिराकरणकार्यं निर्वहेयुः । एवं प्रवृत्तेऽथ कतिपयेन कालेन पञ्चापपञ्चास्यः श्रीमान् क्षितिपालः सर्वमहर्षिप्रतिपादितधर्मशास्त्रसङ्ग्रहग्रन्थेभ्यः सर्वजनात्यन्तिकोपयोगिनां विवादपदानां स्वरूपतो यथावकाशं सर्वमहर्षिसम्मतिवचननिचयैकपरमतात्पर्योद्दिष्टानामेकस्मिन्नेव ग्रन्थे क्रमत उपन्यासेन यथा प्रतिपदोक्तशीघ्रोपस्थितिर्भवेद्—तादृशो ग्रन्थो विरच्यताम्—इति स्वसभाधिष्ठितविद्वज्जनान्प्रत्यादिदेश । ततश्च ते तत्सभाकार्यधुरंधराः—**बालेश्वर कृपाराम रामगोपाल वारेश्वर कृष्णचन्द्र श्रीगौरीकान्त कालाशंकर शामसुन्दर कृष्णकेशव सीताराम** नामधेयाः विद्वांसः सर्वेऽपि ऐकमत्येन सङ्घीभूय सकलविवादपदपारावारपरपारतीरप्रापणनिपुणं अमुं "विवादार्णवसेतु" नामानं ग्रन्थं व्यरीरचन् । तदनु राज्ञः समीपं च प्रापयांचक्रुः । अत ऊर्ध्वं च राजराजेश्वरः **श्रीरणजित्सिंह** एनं ग्रन्थं समुद्वीक्ष्य स्वराष्ट्रेषु एतदनुसारेण समस्तं न्यायकार्यं निरवाहयत् ॥ अस्मिंश्च ग्रन्थे-ऋणादान-निक्षेप-अस्वामिविक्रय-संभूय समुत्थान-दत्ताप्रदानिक-वेतनादान-संविद्व्यतिक्रम-क्रयविक्रयानुशय-स्वामिपालविवाद-सीमाविवाद-दण्डपारुष्य-वाक्पारुष्य-स्तेय-साहस-स्त्रीसङ्ग्रह-स्त्रीपुंधर्मविभाग-द्यूत-आह्वय-इत्येतेषां विवादपदानां समीचीनतया निरूपणं कृतमस्ति । येषां सम्यक् विज्ञानमात्रेण समस्तन्यायाधीशकार्यं निर्वोढुं शक्नुवन्ते लोकाः । स एष ग्रन्थः विस्तरशः समुद्दिष्टनानामुनिवचनपटलालङ्कृतः सम्प्रतीह भारते मण्डलेऽप्रचारातिमिरे गर्त्तनिपतित इवैकान्तकोणनिपतितोऽकिञ्चित्करः संवृत्त आसीत् । अथ कदाचिदेकदाहं वार्तासंविवर्द्धयिषया विषयान्तरेषु सञ्चरन्यदृच्छया (लाहौर) लवपुरीं प्रत्यगच्छं, तत्र च श्रीरणजित्सिंहोपाध्याय—श्रीपण्डितवर्यमधुसूदनपण्डितसंगृहीत— **'मधुसूद-**

नपुस्तकालया' घ्यक्षैः पण्डितज्वालाप्रसादैः सकललोकानुजिघृक्षया प्राक्तनविद्वद्वरसरस्वतीपुनरुज्जिजीवयिषया च तद्विरचितोऽयमपूर्वग्रन्थः संशुद्ध्य प्रकटीकरणाय मत्समीपे दत्तः। सोऽयं मया स्वकीये—"श्रीवेङ्कटेश्वराख्ये" मुद्रणालये संमुद्राप्य राजकार्यनिर्वाहकाणां स्वकीयानादिपारम्पर्यागतधर्मतत्त्वजिज्ञासूनां च सज्जनानां अखण्डं प्रमोदं विधत्तांतमाम्। इत्यभ्यर्थये.

श्रीकृष्णदासात्मजः
गङ्गाविष्णुः, क्षेमराजश्च

---



॥ श्रीः ॥

# अथ विवादार्णवसेतोः विषयानुक्रमणिका.

# विषयानुक्रमणिका.

# विषयानुक्रमणिका.



विषयाः— पृष्ठम्. पङ्क्तिः

विषयाः— पृष्ठम् पङ्क्तिः

विषयाः— पृष्ठम्. पङ्क्तिः

विषयाः— पृष्टम्. पङ्क्तिः

विषयाः— पृष्ठम्. पङ्क्तिः

विषयाः— पृष्ठम् पङ्क्ति.

इति विवादार्णवसेतोः विषयानुक्रमणिका संपूर्णा ।

सूर्णवसेतौः–

पृष्ठम्, पङ्क्तिः

| पुस्तकका नाम | किमत | | ष्टगुणदा |
|---|---|---|---|
| मनुस्मृति सटीक जिल्दबंधी | २ | | २७४ १९ |
| याज्ञवल्क्यस्मृति मिताक्षरासहित | ३ | | ७ |
| अष्टादशस्मृति .... | २ | ८ | ४ |
| पंचस्मृति .... .... | | ८ | ६ |
| बृहत्पाराशरस्मृति .... | १ | ८ | ३ |
| निर्णयसिंधु .... .... | २ | ८ | ६ |
| धर्मसिंधु .... .... | २ | ८ | ५ |
| धर्मसिंधु .... .... | २ | | ४ |
| व्रतराज अतिउत्तम टिप्पणसहित | ५ | | १० |
| तिथिनिर्णय .... .... | | २ | ६ |
| प्रायश्चित्तेंदुशेखर .... | | १० | १ ६ |
| प्रायश्चित्तमंजरी .... | | ६ | १ |
| आशौचनिर्णय .... | | १ | ६ |
| भवाब्धिसेतु भाषाटीकासहित | | १२ | २ |
| शूद्रकमलाकर .... | | २ | २ |
| क्षौरनिर्णय .... | | ६ | २ |
| क्षौरनिर्णयसटीक .... | | | ४ २ |
| शांतिमयूख .... | | १ | २ |
| श्राद्धमयूख .... | | १ | २ |
| प्रपंचसारविवेक .... | | १ | २ |
| वेदस्तुती भाषाटीका | | १० | १ |
| अमृतधाराभाषा .... | | १० | १ ॥ |

श्रीः ।

# विवादार्णवसेतुः ।



॥ श्रीगणेशाय नमः॥ ॥ श्रीवेंकटेशाय नमः ॥

## प्रथमोर्मिः ।

## अथ ऋणादानविवादपदम् ।

तत्र विवादपदान्याह मनुः ॥

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।
संभूय च समुत्थानं दत्तस्यानपकर्म च ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥
सीमाविवादधर्माश्च पारुष्ये दंडवाचिके ।
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥

तत्र ऋणादानं सप्तविधं ईदृशमृणं देयं ईदृशमदेयं अनेनाधिकारिणा देयं अस्मिन्समये देयं अनेन प्रकारेण देयं इत्यधमर्णे पंचविधे उत्तमर्णे दानविधिरादानविधिश्चेति द्विविधं एतदेव स्पष्टीकरोति नारदः ।

ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्माश्च ऋणादानमिति स्मृतम् ॥
स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते ।

तत्कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदिनाम् ॥

स्थानं मूलधनावस्थानं लाभो वृत्तिः दानग्रहणपदे कर्मणिल्युटा साध्ये तेन मूलधनावस्थाने सत्येव यो लाभस्तदर्थं यद्दानं धनिकेन दीयमानं मूलधनं अधमर्णेन च ग्रहणं तथा स्वीकृत्य गृह्यमाणं यत्तदृणमित्यर्थः पर्यवस्यति। रत्नाकरादयोऽप्येवं। कलाशून्ये स्वऽवश्यायाकरणीयत्वरूपगुणयोगाद्गौणप्रयोगः। अत एव वाणिज्यार्थप्रयुक्तस्य न ऋणत्वमिति मिश्राः। बृहस्पतिः।

कुत्सितात्सीदतश्चैव निर्विशंकैः प्रगृह्यते।
चतुर्गुणं वाष्टगुणं कुसीदाख्यऋणं ततः॥

कुत्सितात्सीदतश्चाधमर्णात्सकलं धनं यद्गृह्यते निर्विशंकैरुत्तमर्णैश्चतुर्गुणं वेति वाकारोऽनास्थायां तनद्वैगुण्यादिलाभः तस्मादत्र कुसीदमृणमित्येव लक्षणं तत्र करोति नारदवचने स्फुटमेव। शेषवचनं स्ववयवव्युत्पत्तिमात्रप्रदर्शनपरमिति चंडेश्वरः। अदेयमिति यदुक्तं तदाह कात्यायनः।

न स्त्रीभ्यो दासबालेभ्यः प्रदद्यात्किंचिदुद्धृतम्।
दाता न लभते तत्तु तेभ्यो दत्तं च यद्वसु॥

उद्धृतमुद्धारऋणमितियावत्। तत्रापिविशेषयतिबृहस्पतिः

परिपूर्णं गृहीत्वाधिं बंधं वा साधुलग्नकम्।
लेख्यानूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा॥

यथाविश्वासमेतेषामन्यतमकरणम्। आधिबंधौ भोग्याधिरूपौ नातः पुनरुक्तिः।लग्नकसाधुत्वं ऋणदाने पै-

तृत्वस्थैर्य्येण । नारदः

विश्रंभहेतू द्वावत्र प्रतिकाराधिरेवच ।
लिखितं साक्षिणश्च द्वे प्रमाणे व्यक्तिकारके॥

विश्रंभः प्रयुक्तर्णप्राप्तिं विश्वासः व्यक्तिरभिव्यक्तिः ।

अथ वृद्धिः ।

तत्र चतुःसुवर्णपरिमितपलविंशतौ मासे माषपंचरूपसुवर्णप्रापको वृद्धिः।

वसिष्ठवचने प्रोक्तां वृद्धिं वार्धुषिके शृणु ।
पंचमाषांस्तु विंशत्यामेवं धर्मो न हीयते ॥

इति वसिष्ठवचनात्। कुसीदवृद्धिर्धर्म्या विंशतेः पंचमाषिकी मासमिति गौतमीयाच । धर्म्या शास्त्रानुमता माषः षोडशरक्तिकः ।

माषो विंशतिभागस्तु पलस्य परिकीर्तितः॥

इति बार्हस्पत्याः पलं सुवर्णाश्चत्वार इत्यनेन चतुःसुवर्णस्य पलत्वाभिधानात्। स च माषो विंशतिपलस्याशीतितमो भागस्तथा च दत्तधनस्याशीतितमो भागो वृद्धिरिति फलितम्। एतच्च सबंधके । स्फुटीभविष्यति चेदमुपरिष्टात् । अशीतितमभागस्य वृद्धित्वं मनुरप्याह ।

वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्धिनीम् ।
अशीतिभागं गृह्णीयान्मासाद्वार्धुषिकः शते ॥
मासान्मासमतीत्य ।
अशीतिभागो वृद्धिः स्यान्मासिमासि सबंधके।

इति याज्ञवल्कीयात् ।ततश्च सबंधक एवेयं वृद्धिरिति स्थितिः । प्रतिभूनिराधानयोर्विशेषयति व्यासः ।

सबंधे भाग आशीतः साष्टभागः सलग्नके ।
निराधाने द्विशतकं मासलाभ उदाहृतः ॥

आशीतः अशीतितमः साष्टभागो अशीतितमभागस्याष्टमेन भागेन दशरक्तिकमित्यनेन सहितोऽशीतितमभागः। ततश्च विंशतिपलपरिमितं सुवर्णेन मासे नवतिरक्तिकात्मिका वृद्धिः निराधाने इत्याधानशब्दो लग्नकसहिताधानपरः।तेन लग्नकबंधकरहिते द्विकं शतं शतसुवर्णेषु मासे द्वौ सुवर्णौ वृद्धिः। एतच्च ब्राह्मणविषयम्॥ अतएव क्षत्रियादेस्तु शतेषु त्रिकचतुष्कपंचकसुवर्णरूपमाषवृद्धिमाह मनुः ।

द्विकं त्रिकं चतुष्कं च पंचकं च शतं समम् ।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥
- द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी।

सबंधकादावप्येवं वर्णक्रमेणोत्कर्षः । तथा च ब्राह्मणे या वृद्धिरभिहिता सा क्षत्रिये सार्द्धा वैश्ये द्विगुणा। शूद्रे सार्धद्विगुणा वृद्धिरिति स्थितिः । एतन्मनुवाक्याद्वृद्धिग्रहणे वैश्यस्यापदि ब्राह्मणादीनां च नाधर्मः। कारितादिवृद्धिग्रहणे पुनःपीडाकरत्वादधर्मः। वैश्यातिरिक्तानां त्रयाणां अनापदि उभयवृद्धिग्रहणेऽधर्मइत्यवधेयं । हारीतः। पुराणपंचविंशत्यां मासेष्टपणा वृद्धिः । एवं षड्भिर्मासैश्चतुश्चतुर्भिर्वर्षैर्द्विरवमायातं संतिष्ठेत् एषा

धर्म्या । वृद्धिर्नैतया धर्म्याद्व्यवते । पुराणः षोडशपणाः। तथा च पंचविंशतिकार्षापणे मासेऽष्टपणवृद्धिरेवं क्रमेण प्रतिमासे द्विकं शतं भवति सद्विमासैश्चतुर्भिर्वर्षैः पंचशता मासैर्द्वित्वमायातं द्विगुणीभूतं सत्तिष्ठते ततो न वर्धते धनमित्यर्थः ॥ हारीतः। पुराणे पणिकं मापमित्येके एतत्संकरजात्यधमर्णविषयम्। चातुर्वर्ण्ये द्विशतकादीनां धर्मत्वाभिधानात्। वृद्धिं विभजति बृहस्पतिः। वृद्धिश्चतुर्विधा प्रोक्ता।

पंचधान्यैः समाख्याता तत्त्वतस्ता निबोधत।
कायिका कालिका चैव चक्रवृद्धिस्तथैव च॥
कारिताथ शिखावृद्धिर्भोगलाभस्तथापरा॥

कायिकामाह व्यासः।

दोह्यवाह्यकर्मयुता कायिका समुदाहृता।

दोह्यं गवादि वाह्यं बलीवर्दादि। मूलधनाविरोधिनीं प्रत्यब्ददेयपणतदर्धादिरूपां व्यासोक्तविरुद्धां कायिकावृद्धिमाह नारदः।

कायाविरोधिनी शश्वत्पणपादादिकायिका॥

कायो मूलधनं तदविरोधिनी तन्न नाशयति शश्वत् प्रत्यब्दं देया पणतदर्द्धापणतदर्द्धापणतदर्द्धादिक्रमेण नित्यमुभाभ्यां व्यवस्थापिता सा नारदमते कायिका। हलायुधस्तु ॥ पणार्द्धाद्येत्यत्र पणवाह्येति पठित्वा पणस्य मूलधनस्य यावदवस्थानं तावत् शश्वत् वर्षसहस्रमपि उत्तमर्णेन वाह्येत प्राप्यते सा कायिकेति व्याख्यात-

वान् । तत्राद्या भोगलाभांतर्गता अपरा च तद्भिन्नेति मिश्राः ॥ नारदः ।

प्रतिमासं स्रवति या वृद्धिः सा कालिका मता ।
वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता ॥

यत्र वृद्धिरूपधनं दातुमशक्तोऽधमर्णः सवृद्धिकमिदं दास्यामीति स्वीकरोति तत्र या वृद्धिः सा चक्रवृद्धिरित्यर्थः ॥ कारितां वृद्धिमाह कात्यायनः ।

ऋणिकेन तु या वृद्धिरधिका संप्रकीर्तिता ।
आपत्कालकृता नित्यं दातव्या सा तु कारिता ।
अन्यथा कारिता वृद्धिर्न दातव्या कथंचन ॥

ऋणिकेन यत्र स्वकार्यतयाअशीतिभागद्विशतादितोऽधिका वृद्धिर्व्यवस्थापिता सा कारिता सा च देया अन्यथा बलेन स्वीकारितापि न दातव्या न देयेत्यर्थः ॥ प्रत्यहं गृह्यमाणा वृद्धिः शिखावृद्धिरित्याह बृहस्पतिः ।

प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा मता ।
शिखेव वर्द्धते नित्यं शिरश्छेदान्निवर्तते ॥
मूले दत्ते तथैवैषा शिखावृद्धिस्ततः स्मृता ।

भोगवृद्धिमाह स एव

गृहात्स्तोमः शदः क्षेत्राद्भोगलाभः प्रकीर्तितः ।

गृहस्य स्तोमः भाटकं शयनादि आधिकृतात्क्षेत्रात् शदः सस्यादि अयं चाधिभोग इत्युच्यते । उपलक्षणं चैतत् तथा च कात्यायनः ।

आधिभोगस्त्वशेषो यो वृद्धिस्तु परिकल्पितः ।

प्रयोगो यत्र चैवं स्यादाधिभोगः स उच्यते ॥

यत्राहितस्य भोग एव वृद्धिरिति व्यवस्थाप्य ऋणप्रयोगः कृतस्तत्र या वृद्धिः स त्वशेषाधिभोग इत्यर्थः। एषु विशेषयति बृहस्पतिः।

शिखावृद्धिं कायिकां च भोगलाभं तथैव च।
धनी तावत्समादद्याद्यावन्मूलं न शोधितम् ॥

एषु त्रिपु द्विगुणादिरूपायाः परमवृद्धेरधिकापि वृद्धिश्चिरावस्थाने ग्राह्येत्यर्थः॥

आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते।

एवं च ऋणिकप्रपौत्रेणापि सबंधकमृणं देयमिति पूर्वार्द्धस्यार्थः। आधिधनं यावन्न प्रदीयते तावदुत्तमर्णेनाधिश्चिरमपि भुज्यते तेन द्वैगुण्याधिकत्याकल्नेपि वृद्धिर्भोगरूपा भवत्येवेति परार्धस्य तात्पर्यं॥ उत्तमर्णो दद्यादित्युपक्रम्य विष्णुः। अंत्यवृद्धौ प्रविष्टायामपि न स्थावरमाधिमृते वचनात्। अंत्यवृद्धौ प्रविष्टायामिदं मया-त्याज्यमित्येवंरूपाद्धनिकवचनादृते लाभे भोगद्वारावृतेपि स तन्नदद्यादित्यर्थः। तथा कृतवृद्धिः तत्र निष्कलमृणं गृहीत्वाधमर्णो याचितोपि यदि दिशं व्रजेत्तदा तद्धनस्य मासत्रयोपरि वृद्धिरित्याह कात्यायनः।

कृत्वोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत्।
उर्ध्वंमासत्रयात्तस्यतद्धनंवृद्धिमाप्नुयात्

उद्धारं निष्कलमृणं। पण्ये विशेषमाह स एव।

पण्यं गृहीत्वा यो मूल्यमदत्वैव दिशं व्रजेत्॥

ऋतुत्रयस्योपरिष्टात्तद्धनंवृद्धिमाप्नुयात् ॥

कात्यायनः

निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च ।

याच्यमानमदत्तं वै वर्धते पंचकं शतम ॥

वृद्धिशेषमित्यत्र कर्मधारयेति रत्नाकरः । वृद्धेः शेष इति मिश्राः । क्रयं क्रय्यं विक्रेयो मूल्यं अत्रापि ऋतुत्रयमित्यनुवर्तते । तेन न्यासे वृद्धिशेषेपण्यमूल्यपण्ये चादत्ते याचिते ततः षण्मासानंतरं पणशते पंचपणात्मिका वृद्धिः शूद्रेण देया । द्विकं त्रिकं चतुष्कं चेत्यादिप्रागुक्तमनुवचनैकवाक्यत्वात् । प्रीतिदत्ते विशेषयति स्मृतिः ।

प्रीतिदत्तं न वर्धेत यावन्न प्रतियाचितम् ।

याच्यमाने न चेद्दत्तं वर्द्धते पंचकं शतम् ॥

इतिप्रीतिदत्तं प्रीत्या प्रामितिकं दत्तं सकलत्वेनाप्रमितमनुक्तमेव दत्तम् इयमपिवृद्धिर्मासत्रयोपरि प्रागुक्तमनुवचनेनैकमूलत्वात् । प्रीतिदत्ते अनाकारिता वृद्धिः षण्मासात्प्राक्कदापि न देया तदुत्तरं च देयेत्याह । नारद

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।

अनाकारितमप्यूर्ध्वं वत्सरार्द्धाद्विवर्द्धते ॥

दानमत्र समर्पणमात्रं अन्यथा मासत्रयोपरि वृद्धेरसंभवेन कात्यायनशास्त्रविरोधः स्यात् तथा ।

यो याचितकमादाय तददत्वा दिशं व्रजेत् ।

ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ॥

याचितकमर्पितं देशांतरगमनमविवक्षितम् ।

स्वदेशस्थोपि वा यस्तु न दद्याद्याचितोऽसकृत्।
स तत्राकारितां वृद्धिमनिच्छन्नपि चावहेत्॥

सर्वमिदं छद्मना दानासम्पादने ज्ञेयं। यत्र छलं विनैव कार्यातिशयादन्यत्र गतस्तत्र विशेषयति विष्णुः वृद्धिं दद्युरकृतामपि वत्सरातिक्रमे यथाविहिताम्। वत्सरातिक्रमे वत्सरादूर्ध्वं अकृतामनवधारितां सर्वमिदं मूलनिक्षेपस्वामिना याचितमदत्तं छद्मना अर्थाव्दोत्तरंमच्छद्मना स्वदत्तमव्दोत्तरं तु वर्द्धते इति समुदायार्थः॥

अथ परमवृद्धिः। तत्र गोतमः। चिरकालावस्थानाद्वैगुण्यं प्रयोगस्य प्रयुक्तधनस्य कथितसमयातिरिक्तसमयेपि द्वैगुण्यमेव तिष्ठतीत्यर्थः। इदं च मण्यादाविति मिश्रभट्टाचार्याः। सामान्यधनप्रयोगविषयं चैतदिति विवादरत्नाकरः। मणिमुक्ताप्रवालसुवर्णरजतफालकैटाविकानां चिरकालावस्थानेपि द्वैगुण्याधिका वृद्धिर्न भवतीत्याह कात्यायनः।

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च।
तिष्ठति द्विगुणा वृद्धिः फालकैटाविकस्य च॥

तिष्ठति चिरादपि द्विगुणाधिका न भवतीत्यर्थः। फालं फलोद्भवं कार्पासादि कैटं कीटभवं वस्त्रादि आविकं मेषभवं कम्बलादि। एवं च प्रागुक्तगोतमवचनमप्येतत्परं अन्यथामूलभूतनानाश्रुतिकल्पनापत्तेरिति मिश्रमतमेवात्र ज्यायः। धान्यादौ विशेषयति मनुः।

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता।

धान्ये शदे लवे वाह्ये नातिक्रामति पंचताम् ॥

धान्ये व्रीहियवादौ शदं शस्यं लवो लवनीयं लोमादि एतदपि आविकादतिरिक्तं मणिमुक्तेत्यादिप्रागुक्तवचनैकवाक्यत्वात् । वाह्ये गवादौ सकृत्पदोपादानात् मण्यादौ द्विगुणैव धान्यादौ पंचगुणैव वृद्धिर्भवति । एवं चासकृद्ग्रहणे त्वधिकापीति मिश्राः ॥ तैलादौ विशेषयति कात्यायनः ।

तैलानां चैव सर्वेषां मद्यानामपि सर्पिषाम् ।
वृद्धिरष्टगुणा प्रोक्ता गुडस्य लवणस्य च ॥

गौतमः । कुसीदं पशुपजलोमक्षेत्रसदवाह्येषु नातिक्रामति पंचगुणं । अत्र पशुपजं घृतं विहाय दुग्धादि घृतानामष्टगुणवृद्धेः प्रागुक्तत्वात् । एतेन पशुपजं क्षीरघृतादीति चण्डेश्वरोक्तं हेयम् ॥ वस्त्रादौ विशेषमाह बृहस्पतिः ।

हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके ॥
धान्ये चतुर्गुणा प्रोक्ता सदवाह्यलवेपि च ॥

कुप्यं सुवर्णरूप्याभ्यामन्यत्ताम्रादिकं सदो धान्यातिरिक्तक्षेत्रभवं फलादि । दास्यादीनां गोमहिष्यादीनां च पोषणासमर्थस्य कस्मैचित्क्षीरादिकं वृद्धिं व्यवस्थाप्य पोषणसंतत्यर्थं प्रयुक्तानां चिरावस्थानं संततिरेव वृद्धिर्न वृद्ध्यंतरमित्याह विष्णुः । संततिः स्त्रीपशूनां ॥ शाकादौ विशेषयति बृहस्पतिः ।

उक्ता पंचगुणा शाके बीजेक्षौ षड्गुणा स्मृता ।

गुडमध्वादौ विशेषः प्रकीर्णे वक्ष्यते। तथा हि विष्णुः। रसस्याष्टगुणा अत्र रसपदं लवणादिपरं प्रागुक्तकात्यायनबृहस्पतिवचनैकवाक्यत्वात्। अन्यरसेषु विशेषमाह वसिष्ठः। द्विगुणं हिरण्यं त्रिगुणं धान्यं धान्यैनैव रसा व्याख्याताः पुष्पमूलफलानि च। तुलाधृतमष्टगुणं रसा इक्षुरसादयः। तेपि त्रिगुणा इत्यर्थः। एवं पुष्पादीनि त्रीणि तुलाधृतमपि सुवर्णादिव्यतिरिक्तकर्पूरादिविषयं तेषामन्यविधवृद्धिविशेषत्वात्। तृणकाष्ठादौ चिरकालेपि वृद्ध्यभावमाह बृहस्पतिः।

तृणकाष्ठेष्टकासूत्रकिण्वपूर्णास्थिचर्मणाम्।
हेतिपुष्पफलानां च वृद्धिश्च न विधीयते॥

किण्वं सुरामूलभूतबीजद्रव्यम् अस्थि दंतशंखादि चर्म्म कृष्णसारादिकृत्तिः हेतिरायुधं। पूर्वत्र वृद्धिविशेषवत्तया पुष्पफलयोर्बोधनादनेन विरोधः सुलभदुर्लभभेदेन परिहरणीय इति रत्नाकरः। अनंगीकृतवृद्ध्यंगीकृतवृद्धिभ्यां विरोधो निरसनीय इति मिश्राः। अत्र च प्रागुक्तवचनेषु धान्यानां यत् द्विगुणत्रिगुणचतुर्गुणं पंचगुणमुक्तं तन्मूल्यानुसारेण बोद्धव्यं तथा चेयं व्यवस्था। यत्र प्रयोगकाले सस्योत्पत्तेः प्राग्यादृशमूल्यं सस्योत्पत्त्यनंतरं तस्मादल्पह्रासस्तत्र द्विगुणं यत्र तादृशस्थाने ततोधिकह्रासस्तत्र त्रिगुणं यत्र तादृशस्थले ततोप्यधिकतरो ह्रासस्तत्र चतुर्गुणं यत्र तादृशस्थले ततोप्यधिकतमो ह्रासस्तत्र पंचगुणमिति मिश्रम-

द्धाचार्य्याः। प्रदानकाले मूल्यस्याधिक्ये प्रागुक्तक्रमेण व्यवस्थेति लक्ष्मीधरः। चंडेश्वरस्तु अधमर्णाय कृष्टगुणत्वमध्यगुणत्वे उत्कृष्टगुणत्वे व्यवस्थेति न विरोध इत्याह। एतच्च वृद्धिकथनं वृणसस्योत्पत्तिकालमात्र एव कालांतरस्यानुपादानात्। तथा च हारीतः। तृणं द्विगुणं धान्यं त्रिगुणमेव च वर्धते इति। मूल्यानुसारेण वृद्धिव्यवस्थां मनुरप्याह।

चक्रवृद्धिं समारूढो देशकालव्यवस्थितः।
अतिक्रमन् देशकालौ न तत्फलमवाप्नुयात्॥

चक्रवृद्धिशब्देनात्र चक्रवच्छकटादिभाटकरूपा वृद्धिरभिमता। तां चक्रवृद्धिमाश्रित उत्तमर्णो देशकालौ च व्यवस्थितः। यदि वाराणसीपर्यंतं तव गुडशाकलवणादिशकटेन वहामि तदा ममोद्वहभाटकं इयद्दातव्यमिति देशव्यवस्थितिः। यदि मासं यावद्वहामि तदा ममेयद्धनं दातव्यमिति कालव्यवस्थितिः। एवमभ्युपगतदेशकालनियमता तौ देशकालावतिक्रांतौ यदि दैवादपूरयन् शकटादिना वहनरूपलाभं समग्रं न प्राप्नोति अपि तु।

समुद्रयानकुशला देशकालार्थदर्शिनः।
स्थापयंति च यां वृद्धिं सा तत्राधिगमं प्रति॥

स्थलपथजलपथनिपुणा इयद्देशपर्यंतं वा एतावान् लाभो गृहीतुं युक्त इत्येवं देशकाललाभधनज्ञा वणिजादयो यां वृद्धिं तथाविध विषये व्यवस्थापयंति सैव तत्र व्यव-

स्या तत्राधिगमं धनप्राप्तिं प्रति प्रमाणामिति कुल्लूकभट्टः। समुद्रयाने लाभातिशयं ज्ञात्वाधिकां कल्पां कुर्वंति मिश्राः। एतद्विषय एव हारीतोप्याह। पुराणे पलिकं मासमित्येके। इति नारदेनाप्युक्तम्।

ऋणानां सार्वभौमोयं विधिर्वृद्धिकरः परः।
देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठते॥
द्विगुणं त्रिगुणं चैव तथान्यस्मिंश्चतुर्गुणम्।
तथाष्टगुणमन्यस्मिन् देयं देशे च तिष्ठति॥

अन्यस्मिन्देशेऽन्यस्मिन्काले यावता धनेन प्रस्थं लभ्यते उत्पत्तेः प्राक् तावतैव प्रस्थचतुष्टयमुत्पत्तौ लब्धव्यमिति देशकालज्ञानं यत्र द्वैगुण्यादिलाभस्तत्र वर्णक्रमेणैवास्तु अस्तु वा मासस्थाने तूनं द्वित्रैरपि मासैस्तूनं द्विगुणं ऊनापगमे तु त्रिगुणं धान्यमिति विवादचिंतामणिः। पुराणे तु मासेन पणो वृद्धिरिति संकरजातिपरमिति तु रत्नाकरः॥ अथ वृद्धिनिषेधः॥ विक्रय्यमूल्यवेतननिक्षेप उत्तमसाहसादिरूपदंडच्छलादिगृहीतधर्मानुद्देशसदत्तार्पितद्यूतादिजितेषूभाभ्यामस्वीकृतायां वृद्धौ न वृद्धिः।

पण्यमूल्यं भृतिर्न्यासो दंडो यच्चाभिहारिकम्।
वृथादानाक्षिकपणा वर्धंते नाविवाक्षिताः॥

इति नारदीयात्। पण्यमूल्यं विक्रय्यमूल्यं भृतिर्वेतनं न्यासो निक्षेपः पण्यमूल्यन्यासयोश्च याचितादत्तान्ययोरुपादानं तयोःपूर्वं वृद्धिविधानात्। दंड उत्तमसाहसादिरूपः। आभिहारिकं छलादिना गृहीतम्। वृथादानं

धर्ममनुद्दिश्य दत्तमनर्पितम्। आक्षिकपणो द्यूतेन जितधनम्अविवक्षिताः उभाभ्यामपरिभाषिता वृद्धयः। यदि तूभाभ्यामप्स्वपि वृद्धिः परिभाषिता स्यात्तदा स्यादेव। स्त्रीधनादौ विशेषयति संवर्तः।

न वृद्धिः स्त्रीधने लाभे निक्षेपे च तथा स्थिते।
संदिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयं कृता॥

स्त्रीधनं प्रीतिव्यायितम्।अत एव भर्तृपुत्रादीनुपक्रम्य स एवाह

यदि ह्येकतरोमीषां स्त्रीधनं भक्षयेद्बलात्।
स वृद्धिं प्रति दाप्यः स्याद्विनयं च समाप्नुयात्॥
तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम्।
मूलमेव स दाप्यः स्याद्यदा स धनवान्भवेत्॥

लाभे वृद्धौ निक्षेपे च तथा स्थिते याचितादत्तान्यस्मिन्संदिग्धे देयमदेयं वेति प्रथमं संदेहास्पदे अग्रे देयतया निश्चितेपि न वृद्धिः। यदि न स्यात् स्वयंकृता। स्वयंकृता तु एष्वपि देयेति भावः। तथा व्यासः।

प्रातिभाव्यं भुक्तबंधमगृहीतं च दित्सतः।
न वर्धते प्रपन्नस्य दमः शुल्कं प्रतिश्रुतम्॥

भुक्तबंधो गोप्याधिः। दित्सतो दातुं प्रवृत्तादधमर्णादुत्तमर्णेनागृहीतं धनं प्रपन्नस्य ऋणिकवशंगतस्य यश्चोत्तमसाहसादिरूपो दमः प्रतिश्रुतं यत्र शुल्कं दातुमंगीकृतं। दित्सतोऽगृहीतमित्यत्र विशेषयति याज्ञवल्क्यः।

दीयमानं न गृह्णाति प्रयुक्तं यस्स्वकं धनम्।

मध्यस्थस्यार्पितं तस्याद्वर्धते न ततः परम् ॥

तथा गौतमः । भुक्ताधिर्न वर्द्धते दित्सतोऽवरुद्धस्य च॥ भुक्त आधिर्गोप्याधिर्यस्य धनस्य इति व्युत्पत्त्या गोप्याधिरित्यर्थः । धनं दित्सतोऽधमर्णस्य वृद्धिर्न देया भवति तथाऽवरुद्धस्य गृहीतमृणं भोक्तुमवरुद्धस्याधमर्णावरोधनादारभ्य न वृद्धिर्देया ॥

अथाधिविधिः । तत्र कतिविधा आधय इत्यपेक्षायामाह बृहस्पतिः ।

आधिर्बंधः समाख्यातः स च भोक्तश्चतुर्विधः ।
जंगमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च ॥
यादृच्छिकः सावधिश्च लेख्यारूढोथ साक्षिमान् ।

अत्र जंगमस्थावरादियुग्मचतुष्टये स्वरूपप्रकारकालप्रमाणैश्चतुर्विधत्वं तद्भेदेनाष्टविधत्वमिति कल्पतरुः। तथा नारदः ।

उपचारस्तथैवास्य लाभहानिर्विपर्यये ।
प्रमादाद्धनिनस्तद्वदाधौ विकृतिमागते ॥

उपचारो रक्षणं अस्य आधेस्तथैव उपचारो यथैव स्थापनं तथैव रक्षणमित्यर्थः । धनिनः प्रमादाद्विपर्यये आधिनाशे विकृतिं वा गते भग्नत्वादिकं लब्धे धनिकस्य लाभहानिरित्यर्थः । कात्यायनः ।

गोप्याधिभोगे नो वृद्धिः सोपकारे च हापिते ॥

गोप्याधेस्ताम्रकटाहादेर्भोगे न भोक्तुर्धनिकस्य वृद्धिर्लभ्या । सोपकारे बलीवर्दादौ हापिते सम्यग्व्यवहाराक्ष-

मतां नीते तेन कस्याप्याधेर्धनिकदोषेण व्यवहाराक्षमत्वे न वृद्धिरित्यर्थः। तथा मनुः।

यः स्वामिनाननुज्ञातमाधिं भुंक्ते विचक्षणः।
तेनार्धवृद्धिर्भोक्तव्या तस्य भोगस्य निष्कृतिः॥
अकाममननुज्ञातमाधिं यः कर्म कारयेत्।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा लभते न सः॥

इति कात्यायनीयात्। अनिच्छतो भोगेऽर्धवृद्धिहानिः गोप्याधिभोगे पुन. सर्ववृद्धिहानिरित्युक्तमसकृद्भोगविषयं। विष्णुः आध्युपभोगे वृद्ध्यभावो दैवराजोपघातमृते विनष्टमाधिमुत्तमर्णो दद्यात्॥ दैवोपघातमस्मदादिप्रयत्नानपेक्षं राजोपघातं राजप्रयत्नापेक्षं उभयत्रैव स्वापराधं विनाकृतमिति विवक्षितं। यत्तु।

विनष्टे मूलहानिः स्याद्दैवराजकृताद्दते।

इति नारदेन मूलहानिरित्युक्तं तदाधेरदानपक्षे ज्ञेयमिति चंडेश्वरः। बहुमूल्याध्यादौ विशेषः प्रकीर्णे द्रष्टव्यः। बृहस्पतिः।

ज्ञातिसंबंधिसुहृदामृणं देयं सबंधकम्।
अन्येषां लग्नकोपेतं लेख्यसाक्षियुतं तथा॥
स्वेच्छादेयं हिरण्यायं रसधान्यं तु सावधि।
देशस्थित्या प्रदातव्यं ग्रहीतव्यं तथैव तत्॥

हिरण्यदानेऽवधौ स्वेच्छा रसादौ अवधेरावश्यकत्वम्।

समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत्।
न याचते च यः कश्चिल्लाभात्स परिहीयते॥

वाह्यबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते ।
तेनैव सा प्रदातव्या सर्वेषां कृषिजीविना ॥

क्षेत्रे हानिर्यस्य विसामग्र्याद्यरक्षेत्रं पतितं तरक्षतिस्तेनैव सोढव्या । तथा बृहस्पतिः ।

भुक्ते वाऽसारतां प्राप्ते मूलहानिः प्रजायते ।
बहुमूल्यं यत्र नष्टमृणिकं तत्र तोषयेत् ॥

असारतां प्राप्ते सर्वथा व्यवहाराक्षमतां नीते बहुमूल्यं लभ्यधनापेक्षया । व्यासः ।

ग्रहीतृदोषान्नष्टं चेद्बंधं हैमादिकं भवेत् ।
ऋणं सलाभ संशोध्य तन्मूल्यं दाप्यते धनी ॥

क्षेत्रे विशेषः प्रकीर्णे द्रष्टव्यः । तथा ।

धनं ऋणिकृतं दत्वा यस्याधिं प्रार्थयेदृणी ॥
सदैव तस्य भोक्तव्यं त्वन्यथा दोषवान् धनी ।

एतच्चावधिविरहितभोग्याधिविषयम् । तथा याज्ञवल्क्यः ।

उपस्थितस्य भोक्तव्य आधिः स्तेयोन्यथा भवेत् ।
प्रयोजके सति धनं कुले दत्वाधिमाप्नुयात् ॥

आधित्याजनायोपस्थितस्याधमर्णस्य धनिना धनं गृहीत्वा आधिर्मोक्तव्यः । अमोचने तु चौरवद्भवेत् प्रयोजके आधिधनप्रयोक्तरि असति असंनिहिते कुले पुत्रादावाधिधनं दत्वा अधमर्ण आधिं गृह्णातीत्यर्थः ॥

अथाधिसिद्धिः ॥ तत्र मनुः ।

नवाधेः कालसंरोधान्न निसर्गो न विक्रयः ।

कालसंरोधाच्चिरकालावस्थानान्निसर्गोत्रान्यत्र तदधिकथनेनाधीकरणं दानमिति तु हलायुधः । न निसर्गो न विक्रयः उत्तमर्णेन कर्तव्य इति शेषः। केचित्तु उत्तमर्णस्य सत्त्वाभावेन प्रसक्त्यभावान्निषेधो न युक्तः अतः संरोधादवधिकालनियमनात्तदभ्यंतरे चास्वातंत्र्यादधमर्णेन निसर्गोऽन्यस्मै दानं विक्रयश्चाधेर्न कर्तव्य इति समुदितार्थ इत्याहुः । आधीकृत्य विक्रीतस्य विक्रयो बलवानिति तु तादृगवधिरहिताधिपरम् ।

अनिर्मुक्तस्य चैवाधेर्न दानं न च विक्रयः ।

इति तु निर्मूलं समूलत्वेनैतादृशाधिपरमिति बोध्यम् । एतच्च मनुवाक्यं भोग्याधिविषयमिति कल्पतरौ प्रायोवादः तन्न चारु न्यायसम्पादकृतव्यवहारगोप्याधिविषयत्वस्यापि संभवात् । कात्यायनः ।

आधिमेकं द्वयोर्यत्र कुर्यात्का प्रतिपद्भवेत् ।
द्वयोः पूर्वतरं ग्राह्यमाधाता चौरदंडभाक् ।

प्रतिपद्व्यवस्था पूर्वतरं पूर्वमाधानं ग्राह्यमित्यर्थः । तथा विष्णुः । गोचर्ममात्रामपि भूमिमन्यस्याधीकृतां तस्मादनिर्मोच्यान्यस्य यः प्रयच्छति स वध्यः । ऊना चेत्षोडशसुवर्णान् दंड्यः ।उत्तराधिर्न सिध्यतीत्यर्थः । मदनपारिजातादयोप्येवं । गोचर्मपदार्थमाह विष्णुः ।

एकोऽश्नीयाद्यदुत्पन्नं नरः सांवत्सरं फलम् ।
गोचर्ममात्रा सा क्षोणी स्तोका वा यदि वा बहुः ॥

आधेः पौर्वापर्यसंदेहे स्वाह ।

ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ।
यस्य भुक्तिर्जयस्तस्य बलात्कारं विना भवेत्॥
तुल्यकालोपभोगौ चेद्भोगोपि समको भवेत्॥
प्रदाने विक्रये चैव विधिरेष प्रकीर्तितः॥

ताभ्यां विभज्य भोक्तव्यमित्यर्थः। इदं चाधेः पौर्वापर्यसंदेहे ज्ञेयं। उभयत्र दृष्टमानतौल्ये अदृष्टेन निर्णय इति मिश्राः। भोगानुसारेण व्यवस्थेति विश्वरूपधारेश्वरौ। बृहस्पतिः

क्षेत्रमेकं द्वयोर्बंधे दत्तं यत्समकालिकम्।
येन भुक्तं भवेत्पूर्वं तस्य तत्सिद्धिमाप्नुयात्॥

समकालिकं पूर्वापरभूततयाऽशक्यावधारणं द्वाभ्यां वचनाभ्यां पूर्वापरभूतनशक्यावधारणे यस्य बलात्कारशून्या भुक्तिस्तस्याधित्वं भवतीत्युक्तं। यत्र तु द्वयोरपि न तादृशो भोगस्तत्राह स एव।

तुल्यकालोपस्थितयोर्द्वयोरपि समं भवेत्।
प्रदाने विक्रये चैव विधिः स परिकीर्तितः॥

यत्रैका क्रिया साक्षिमती अन्या च लेख्यवती तत्र लेख्यं बलवदित्याह स एव।

आधानं विक्रयो दानं साक्षिलेख्यकृतं यदा।
एकक्रियानिबंधेन लेख्यं तत्रापहारकम्॥

अपहारकं बलवत् आधित्वादिसाधकमिति यावत्। एकक्रियानिबन्धेन एकस्य पुंसः क्रियाया निबंधेन लेख्यनिवेशनहेतुनेत्यर्थः। तथा।

अनिर्दिष्टं च निर्दिष्टमेकत्र च विशेषितम्।
विशेषलिखितं ज्याय इति कात्यायनोऽब्रवीत्॥

इत्यनेन सामान्येन रूपेण एकमेकत्राधीकृतमन्यस्मिंश्च तदेव नामचिह्नितं तत्र निरोधे सति नामचिह्नितमाधित्वं भजत इत्युक्तम्। तथा।

बलादकामं यत्राधिमनिर्दिष्टं प्रवेशयेत्।
प्राप्नुयात्साहसं कृत्यमाधाता चाधिमाप्नुयात्॥

यत्राहितक्षत्रादेरधिकमपि क्षत्रादि बलादाधौ प्रवेश्य धनिको भुंक्तेतत्रासौ दंड्यः आधाता च देयमृणमदत्वैवाधीकृतं क्षेत्राधिं लभते इत्यर्थः॥

॥ अथ प्रतिभूविधिः॥

कतिविधः प्रतिभूरित्याह बृहस्पतिः।

दर्शने प्रत्यये दाने ऋणे द्रव्यार्पणे तथा।
चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः॥
आहैको दर्शयाम्येनं साधुरेषोऽपरोऽब्रवीत्।
दाताहमेतद्द्रविणमर्पयाम्यपरोऽब्रवीत्॥

ऋणे दाने इति संबंधः। अर्पणमत्र याचितकविषयं। तेन यत्केनचित् प्रार्थनीयं तत्रापरो वदति यद्ययं नानीयार्पयति तदा मयार्पणीयमिति तेन तत्रार्पणमात्रं न दानं ऋणे तु दानमेव द्वयोरिति भेदः। संप्रदायस्तु ऋणिद्रव्यार्पणे इति पठित्वा ऋणिद्रव्यस्य धनिकायार्पण इत्यर्थमाह। प्रतिभूभेदेन व्यवस्थाभेदमाह स एव।

आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम्।

उत्तरौ तु विसंवादे तौ विना तत्सुतावपि ॥

वितथे दर्शनाकरण उपदर्शितसाधुत्वभंगे च तत्कालावेदितं धनं दाप्यौ। याज्ञवल्क्यः।

दर्शनप्रतिभूर्यत्र मृतः प्रत्ययिकोपि वा।
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय ये स्थिताः ॥

दानार्पणप्रतिभूत्वेन ये स्थिताः तत्पुत्रा दद्युरित्यर्थः दर्शनप्रतिभूर्यत्र देशे काले वा दर्शनं कारयितुं स्वीकृतवांस्तत्र राजदैवोपघातमन्तरेणादर्शयंल्लिखितनिबंधमृणं धनिकाय दद्यात्। दैवराजोपघाते तु उपघातकाले यो न दर्शयेत्सोपि निबंधं दद्यात्। प्रेतेप्यधमर्णे दर्शनप्रतिभूर्धनं दद्यादित्याह कात्यायनः।

दर्शनप्रतिभूर्यत्र काले देशे न दर्शयेत्।
निबंधमाहरेत्तत्र दैवराजकृताद्दते ॥
काले व्यतीते प्रतिभूर्यदि तत्रैव दर्शयेत्।
निबंधं दापयेत्तत्र प्रेते चैवं विधिः स्मृतः ॥

प्रेतेऽभियोगिनि दर्शनावधिमतिक्रम्य मृते यदि बंधकं गृहीत्वा दर्शनप्रतिभूरभूत् तदा तत्पुत्रोपि दाप्यः

गृहीत्वा बंधकं यत्र दर्शनेस्य स्थितो भवेत्।
विभाव्यो वादिना तत्र दाप्यः स्यात्तदृणं सुतः ॥

इति कात्यायनीयात्। बंधकं गृहीत्वा दर्शनप्रतिभूरयमभूदिति विभाव्य तस्मिन्मृते धनिकाय दर्शनप्रतिभूपुत्रस्तदृणं दाप्यो मध्यस्थेनेत्यर्थः। पितामहस्य सकलमृणं पौत्रेण निष्कलं देयं पितुः प्रातिभाव्यागतमृणं पुत्रेण

निष्कलं देयं। प्रपौत्रपौत्रौ च न दद्यातामित्याह व्यासः।

ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः।
समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः॥

यत्र बहवः प्रतिभुवस्तत्र विशेषयति याज्ञवल्क्यः।

बहवः स्युर्यदा स्वांशैर्दद्युः प्रतिभुवो धनम्।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि॥

एकस्य प्रतिभुवश्छायां सादृश्यं निरपेक्षस्वकार्यकर्तृत्वमाश्रितेषु एकैकोऽपि धनिकस्य धनं सर्वं दापयितव्य इति विवादरत्नाकरः। यथारुचीति यत्र धनिको व्यवहारकाले वदति समेच्छया यस्य कस्यापि पार्श्वे गृह्णते न मे मेलनाय यत्नस्तत्र एकोपि लग्नको धनं सर्वं ददातीत्यर्थः। इति विवादचिंतामणिः। यत्र ऋण्यंशनिवसेन प्रतिभुवो भूतास्तत्र मूलऋणिकाभावे स्वकीयमंशं ते दद्युः। एकस्य प्रतिभुवश्छायां सादृश्यमाश्रितेषु प्रतिभूषु धनिकः स्वेच्छया एकस्मिन्नेव प्रतिभुवि सर्वधनं गृह्णीयादिति दीपकलिका। पलायितस्याधमर्णस्यान्वेषणे प्रतिभुवे पक्षादिकालं दद्यात्। यथा बृहस्पतिः।

नष्टस्यान्वेषणे कालं दद्यात्प्रतिभुवे धनी।
देशानुरूपतः पक्षं मासं सार्धमथापि वा॥
नात्यंतं पीडनीयाः स्युर्ऋणं दाप्याः शनैःशनैः।
स्वसाक्ष्येण नियोज्याः स्युर्विधिः प्रतिभुवाममम्॥

नष्टः पलायितः।नाशःपलायनेपि स्यादित्यनुशासनात्। पलायितस्याधमर्णस्येति शेषः। स्वसाक्ष्ये स्वसमक्षे ति-

छति दित्सति वा अधमर्णे प्रतिभुवो दर्शनाय दानाय वा न नियोज्या इत्यर्थः। विष्णुनारदौ।

पंचार्थं प्रतिभूर्दद्याद्धनिकेनैव पीडितः।
ऋणिकस्तं प्रतिभुवे द्विगुणं दातुमर्हति॥

अत्र विशेषयति बृहस्पतिः।

प्रातिभाव्यं तु यो दद्यात्पीडितः प्रतिभावितः।
त्रिपक्षात्परतः सार्थं द्विगुणं लब्धुमर्हति॥

त्रिपक्षादर्वाक् तथाविधं धनं निष्कलं ग्राह्यम्। तथाच कात्यायनः

यस्यार्थे येन यद्दत्तं धनिना पीडितेन तु।
साक्षिभिर्भावितेनैव प्रतिभूस्तत्समाप्नुयात्।

यत्प्रतिभुवा दत्तं तत्समाप्नुयादिति वचनान्निष्कलत्वमवगम्यते इति चंडेश्वरः। ग्रहेश्वरमिश्रास्तु यस्यार्थे येन यद्दत्तमित्यादेः प्रतिभुवा धनिकसमाधानाय यदन्यदपि दत्तं स्यात्तदपि तेन ऋणिकपार्श्वे ग्रहीतव्यमित्यर्थेऽवतारणमिति प्राहुः। प्रतिभूग्रहणे च साधुसिद्धौ समर्थत्वमेवोपयुज्यते। यथा कात्यायनः।

नाशक्तो धनिने दातुं दंडं राज्ञे च तत्समम्॥
नाविज्ञातो ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति।

समर्थत्वं लोकत एव ज्ञेयं। तथा कात्यायनः।

न स्वामी नापि वा शत्रुः स्वामिनाधिकृतस्तथा।
निरुद्धो दंडितश्चैव संशयस्थश्च न क्वचित्॥
नैव ऋक्थी न मित्रं च न चैवांतेनिवासिनः।

नैव राजा नियुक्तश्च येन प्रव्रजिता न यः ॥

संशयस्य आसन्नमरणसंशयविषयः अभिशस्त इति यावत् इति केचित् । ऋक्थी धनिकेन ऋणिकेन वा साधारणऋक्थः अंतेनिवासिनः शिष्याः । मिताक्षराकारेणात्यंतनिवासिन इति पठित्वा नैष्ठिकब्रह्मचारिण इति व्याख्यातम् ॥

इति श्रीविद्वद्विरचिते विवादार्णवसेत्वाख्ये ग्रंथे ऋणसंज्ञाप्रकरणं नाम प्रथमोर्मिः ॥ १ ॥

द्वितीयोर्मिः

## ॥ अथर्णदानविधिः ॥

तत्र बृहस्पतिः ।

परहस्ताद्गृहीतं यत् कुसीदविधिना ऋणम् ।
येन यत्र यथा देयमदेयं वोच्यतेऽधुना ॥
याचमानाय दातव्यमप्रकालकृतं ऋणम ।
पूर्णावधौ शांतलाभमभावे च पितुः सुतैः ॥

प्रकालोवधिः ।तेनावधिमंतरेण यद्गृहीतमृणं तथा या- ।ऽ याचमानमात्राय दातव्यं सावधि तु गृहीतुमवधौ पूर्णे देयमित्यर्थः । एवमेव चंडेश्वरादयः । मिश्रास्तु यत्र धनिकेच्छैव दानावधित्वेन उभाभ्यां नियमिता तत्रेदमवतारणीयमिति प्राहुः । तथा नारदः ।

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः ।
विभक्ता ह्यविभक्ता वा यो वा तामुद्वहेद्धुरम् ॥

याज्ञवल्क्यः ।

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥

पितरि दातुमशक्ते पुत्रेण तदभावे पौत्रेण ऋणं देयं निह्नवे ऋणिकेन गोपने कृते साक्षिभावितं देयतया प्रमापितमिति यावत्। इति रत्नाकरः। ऋणग्राहिणि पितरि प्रोषिते मृते द्यूतवेश्याद्यासक्ते वाशब्दाद्दुश्चिकित्सव्याध्यादिगृहीते पतिते तदृणं पुत्रेण देयमभावे पौत्रेण विप्रतिपत्तौ साक्ष्यादिप्रतिपादितं देयमिति दीपकलिका। विभावितमृणं पित्र्यमात्मीयवत् सवृद्धिकं पुत्रैर्दातव्यं पौत्रैरवृद्धिकं देयं प्रपौत्रैस्तु न देयम्।

ऋणमात्मीयवत्पित्र्यं पौत्रैर्देयं विभावितम्।
पैतामहं समं देयं न देयं तत्सुतेन तु ॥

इति बृहस्पतिवचनात्। अत्र प्रपौत्रमारभ्य यदृणस्यादेयत्वमुक्तं तत्क्षेत्रादिकं भोग्याधिमनिक्षिप्य यत्प्रपितामहादिना ऋणं कृतं तत्र मंतव्यं। भोग्याधिं तु दत्त्वा कृतमृणं चतुर्थादिभिरपि तत्कुल्यैर्देयमित्याह रत्नाकरधृतं याज्ञवल्क्यवचनं।

ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु।
आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते ॥

प्रोषिते तु विशेषयति नारदः।

नार्वाक्संवत्सराद्विंशात् पितरि प्रोषिते सुतः।
ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथापि वा ॥

कात्यायनः।

विद्यमानेपि रोगार्ते स्वदेशात्प्रोषिते तथा।
विंशात्संवत्सराद्देयमृणं पितृकृतं सुतैः ॥

इदं च रोगार्तस्य शक्यप्रतिक्रियत्वसंभावनायां प्रोषितस्य पुनरागमनसंभावनायां च ज्ञेयं यदि त्वसाध्यत्वेन कथंचिद्रोगावधारणं प्रवासिनश्च पुनरागमनव्यतिरेकावधारणं तदा पुनर्जीवतोऽपि मृतस्येव, पितुः पुत्र एव ऋणं दातुमर्हति। विंशतिवर्षपर्यंतं प्रतीक्षा न कार्येत्याहतुः कात्यायनबृहस्पती।

व्याधितोन्मत्तवृद्धानां तथा दीर्घप्रवासिनाम्।
ऋणमेवंविधं पुत्राञ्जीवतामपि दापयेत् ॥
सान्निध्येऽपि पितुः पुत्रैर्ऋणं देयं विभावितम।
जात्यंधपतितोन्मत्तक्षयश्वित्रादिरोगिणाम ॥

जात्यंधो जन्मांधः। क्षयश्वित्रेत्यसाध्यरोगोपलक्षकम्। पारिजातस्तु यदि पिता सर्वथा दानासमर्थस्तदा पुत्रेण ऋणं दातव्यमिति समुदायार्थ इत्याह। रत्नाकरस्तु व्यसनावशानधिकारप्रयोजकरूपवान् पिता अविभक्तधनश्च पुत्रस्तदा पुत्रेणैव तदृणं देयमिति यदि त्वसाधारणधनः पिता तथाभूतोऽपि तदा तेनैव दातव्यं यदा तु पिता सर्वथैव ऋणदानासमर्थः पुत्रस्तु समर्थस्तदा पुत्रेणैव दातव्यमिति प्राह। यत् परेण सह पित्रैकच्छायया कृतमृणं तत्तत्परस्याभावे प्रोषिते पितरि पित्रंशं परांश च पुत्रो दद्यात्। मृते पितरि पित्रंशमात्रं दद्यादित्याह बृहस्पतिः।

एकच्छायाकृतं सर्वं दद्यात्तु शेषिते सुतः ।
मृते पितरि पित्रंशं परर्णे न कदाचन ॥

अविभक्तैरेकच्छायाश्रितैर्यदृणं कृतं तदेकोपि यस्तेषां मध्ये तिष्ठेत् स दद्यात् पैतृकमप्यविभक्तानां भ्रातृणां मध्ये यस्तिष्ठति स सर्वमेकोऽपि दाप्यः। विभक्ताश्च भ्रातरो यथांशं दद्युरविभक्तैः कृतमृणं तदेकोपि यस्तेषां मध्ये तिष्ठेत् स दद्यात् । पैतृकमप्यविभक्तानां भ्रातृणां विभक्ताश्च दायानुरूपमंशम् ॥ इति विष्णुसूत्रात् । अविभक्तानां मध्ये एकेनापि यत्कुटुंबार्थं कृतमृणं तत्कर्तरि मृते प्रोषिते वा अन्येप्यविभक्ता दद्युः । यथा चंडेश्वरधृतं याज्ञवल्क्यवचनम्

अविभक्तैः कुटुंबार्थे यदृणं तु कृतं भवेत् ।
दद्युस्तद्दक्थिनः प्रेते प्रोषिते वा कुटुंबिनि ॥

एकत्वेन वसद्भिः पितृभ्रातृभ्रातृजादिभिरेकेन कुटुंबार्थं यदृणं कृतं तस्मिन्कुटुंबिनि प्रेते प्रोषिते वा तदृणं ये तद्दक्थाधिकारिणस्ते दद्युः। सामान्यकुटुंबार्थं कृतं विभक्तैरपि देयमित्याह मनुः

ग्रहीता यदि नष्टः स्यात्कुटुंबार्थे कृतो व्ययः ।
दातव्यं बांधवैस्तत्स्याद्विभक्तैरपि च स्वतः ॥

इति दीपकलिका । गृहिकुटुंबार्थमन्यैरपि कृतमृणं गृहिणा दातव्यम्

पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः ।
यद्गृहीतं कुटुंबार्थे तद्गृही दातुमर्हति ॥

इति बृहस्पतिवचनात्।अत्र विशेषयति कात्यायनः

नाप्राप्तव्यवहारैस्तु पितर्युपरते क्वचित्।
काले तु विधिना देयं वसेयुर्नरकेऽन्यथा॥

पितरि प्रेतेऽप्यप्राप्तव्यवहारैश्च पुत्रैर्ऋणं न देयं व्यवहारप्राप्तिकाले तु देयं विधिना यथांशप्राप्तीत्यर्थः।तथा बृहस्पतिः।

ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितम्।
सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हति॥

कात्यायनः।

ऋणं पुत्रकृतं पित्रा न देयमिति धर्मतः।
देयं प्रतिश्रुतं यच्च यच्च स्यादनुवर्णितम्॥

प्रतिश्रुतं ऋणादानसमयेंगीकृतं आदानानंतरं स्वीकृतं चानुवर्णितं। अत्र पुत्रपदमुपलक्षणं। मनुः

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकं च यत्।
दंडशुल्कावशेषं च न पुत्रो दातुमर्हति॥
दर्शनप्रातिभाव्ये तु विधिः पूर्वं प्रचोदितः॥

प्रातिभाव्यमित्यत्र दर्शनप्रत्ययप्रातिभुवौ विवक्षितौ वृथादानमफलदानं आक्षिकं द्यूतनिमित्तं सौरिकं सुरापाननिमित्तं अत्र द्यूतसुरापानयोरनर्हयोर्निमित्तत्वं विवक्षितम। दर्शनप्रातिभाव्ये त्वित्यनेन प्रत्ययप्रातिभाव्यमप्युपलक्षणीयं। बृहस्पतिः।

सौराक्षिकं वृथादानं कामक्रोधप्रतिश्रुतम्।
प्रातिभाव्यं दंडशुल्कं शेषं पुत्रान्न दापयेत्॥

कामेति कामेन क्रोधेन वा प्रतिश्रुतमित्यर्थः। कामक्रोधकृतमाह कात्यायनः।

लिखित्वा सूक्तकं वापि देयं यत्तु प्रतिश्रुतम्।
परपूर्वस्त्रियै तत्तु विद्यात्कामकृतं ऋणम्॥
यत्र हिंसां समुत्पाद्य क्रोधाद्द्रव्यं विनाश्य वा।
उक्तं तुष्टिकरं यत्तु विद्यात्क्रोधकृतं तु तत्॥

शेषः सान्निध्याद्दंडशुल्कस्यैव व्यक्तमाह व्यासः

दंडो वा दंडशेषो वा शुल्कं तच्छेष एव वा।
न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम्॥

न व्यावहारिकं व्यवहारबहिष्कृतमित्यर्थः।तथा गौतमः प्रतिभाव्यवणिक्शुल्कमद्ययूतदंडे पुत्रान्नाभ्यभिभवेयुः प्रातिभाव्यवाणिज्यादिनिमित्तानि ऋणानि न पुत्रानभ्यभिभवेयुः न पुत्रान्परिभवेयुः न पुत्रैर्देयानीति तात्पर्यार्थः। विष्णुः। न स्त्री पतिपुत्रकृतं न स्त्रीकृतं पतिपुत्रौ। अत्र विशेषयति नारदः।

न भार्यया कृतमृणं कथं चित्पत्युराभवेत्।
आपत्कालादृते पुंसः कुटुम्बार्थो हि दुस्तरः॥

आपत्कृतकुटुम्बार्थकृतादृते भार्यया कृतमृणं न पत्युराभवेत् न पत्युर्देयमित्यर्थः। याज्ञवल्क्यः

गोपशौंडिकशैलूषरजकव्याधयोषिता।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया॥

शैलूषो नटः गोपादीनां स्त्रीकृतमृणं पतिर्दद्यात् य-

स्माहृतिस्तदाश्रया इति हेतुनिर्देशादिति दीपकलिका। बृहस्पतिः।

शौंडिकव्याधरजकगोपनाविकयोषिताम्।
अधिष्ठाता ऋणं दाप्यस्तासां भर्तृक्रियासु तत्।

तासामृणमधिष्ठाता भर्ता दाप्यो यस्मात् भर्तुरेव क्रियासु तद्दणं ताभिः कृतमिति योजना। इदं च प्रपंचमात्रं तेनान्यत्रापि यत्र प्राधान्यं स्त्रीणां तत्र तथैव न तु जात्यादरः कार्यः। तत्र योषिदेव सर्वमनुसंधत्ते पुरुषस्याज्ञत्वादिति चंडेश्वरवाचस्पतिमिश्रादयः। अन्यत्र यादृशं स्त्रिया देयं तत्राह याज्ञवल्क्यः

प्रतिदत्तं स्त्रिया देयं पत्या या सह यत्कृतम्।
स्वयंकृतं च यद्दणं नान्यत्स्त्री दातुमर्हति॥

कात्यायनोऽपि।

भर्त्रा पुत्रेण सार्द्धं वा केवलं वात्मना कृतम्।
ऋणमेवंविधं दद्यान्नान्यथा तत्कृतं स्त्रिया॥

तत्कृतं भर्तृपुत्रकृतं। नारदः।

न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा।
मर्तुकामेन वा भर्त्रा उक्ता देयमृणं त्वया॥
अप्रपन्नापि सा दाप्या धनं यद्याश्रितं स्त्रिया॥

प्रत्यासन्नमरणेन प्रत्यासन्नप्रवासेन वा भर्त्रा उक्ता देयमृणं त्वया देयमित्याज्ञापिता या सा उक्तास्मिन् मृते देशांतरं गते वा ऋणं अनिच्छंत्यपि दापयितव्या यदि भर्तृधनं तदाश्रितमित्यर्थः। मर्तुकामेनेत्युपलक्षणं। नारदः।

अंतिमा स्वैरिणीनां या पुनर्भ्वां प्रथमा च या।
ऋणं तयोः पतिकृतं दद्याद्यस्ते समश्नुते ॥

चतुर्विधानां स्वैरिणीनां व्यभिचारिणीनां मध्ये या अंतिमा चतुर्थी पुनर्भ्वां च त्रिविधानां मध्ये या प्रथमा प्रथमोक्ता ते एव स्त्रियौ परिगृह्णन् तत्पतिकृतमृणं दद्यात्। पुनर्भूत्रैविध्यं स्वैरिणीचातुर्विध्यं च नारद एवाह तद्यथा।

परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम्।
पुनर्भूस्त्रिविधा तासां स्वैरिणी च चतुर्विधा ॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ॥
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा ॥
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते।
उत्पन्नसाहसाऽन्यस्मिन्द्वितीया सा प्रकीर्तिता ॥
असत्सु देवरेषु स्त्री बांधवैर्या प्रदीयते।
सवर्णाय सपिंडाय सा तृतीया प्रकीर्तिता ॥
स्त्री प्रसूता प्रसूता वा पत्यावेव तु जीवति।
कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता।
पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्तिता ॥
मृते भर्तरि तु प्राप्ता देवरादीनुपास्य या।
उपागच्छेत्परं कामात्सा तृतीया प्रकीर्तिता ॥
प्राप्ता देशाद्धतक्रीता क्षुत्पिपासातुरा तु या।
तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥

कात्यायनः।

निर्धनैरनपत्यैस्तु यत्कृतं शौंडिकादिभिः ।
तत्स्त्रीणामुपभोक्ता तु दद्यात्तदृणमेव तु ॥

आदिशब्देन रुपधीनवृत्तयो ग्राह्याः । कात्यायनः ।

दीर्घप्रवासिनिर्बंधुजडोन्मतादिलिंगिनाम् ।
जीविनामपि दातव्यं तत्स्त्रीद्रव्यसमाश्रितैः ॥

दीर्घप्रवासिप्रभृतीनां या स्त्री यच्च द्रव्यं तद्ग्राहकैरित्यर्थः । अत्र च पितुर्यादृशमेव ऋक्थग्राहिप्रभृतिभिः किं त्वेतैरनूद्यैव पुत्रवदत्रापि वृद्धिदानानभिधानादिति विशेषः । यत्र तु ब्राह्मणो धनिकः स च निरन्वयो मृतस्तत्राह नारदः

ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः ।
सकुल्येभ्योऽस्य निनयेत्तदभावेऽस्य बंधुषु ॥
यदा च न सकुल्याः स्युर्न च संबंधिबांधवाः ।
तदा दद्याद्द्विजातिभ्यस्तेष्वसत्स्वप्सु निक्षिपेत् ॥

ब्राह्मणस्य धनिकस्य सान्वयस्य देयं तेन तस्मै तद्ददता तदन्वयाय दातव्यं यदि तु सान्वयो नास्त्यसौ तदानुक्रमेण सकुल्यादिभ्यस्तदभावेऽप्सु निक्षिपेत् । बांधवा अन्वयसकुल्यान्यतमा मातापितृसंबद्धाः।क्षत्रियादेस्तु राजैव गृह्णीयात्।ब्राह्मणधनवर्जं हि राजगामि॥ इति वचनात्। तेन ब्रह्मस्वं राज्ञा कथमपि न गृहीतव्यमित्यर्थः ॥

इति विद्वद्भिरचिते विवादार्णवसेत्वाख्ये । ऋणादान प्रकरणं द्वितीयोर्मिः ॥ २ ॥

तृतीयोर्मिः ।

**अथोद्ग्राहणविधिः**। यत्रर्णं प्रार्थनकाले प्रार्थितोपि ऋणी न ददाति तत्र धनिकेन यत् कर्त्तव्यं तदाह मनुः

यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः ।
तैस्तैरुपायैः संगृह्य साधयेदधमर्णिकम् ॥
धर्मेण व्यवहारेण च्छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पचमेन बलेन च ॥

पूर्वपूर्वसामर्थ्याभावे उत्तरोत्तरं संगृह्य वशीकृत्य । धर्मे बृहस्पतिराह ।

सुहृत्संबंधिसंदिष्टैः सामोक्त्यानुगमेन च ।
प्रायेण वा ऋणी दाप्यो धर्म एष उदाहृतः ॥

ऋणिकस्य ये सुहृत्संबंधिनस्तेषु संदेशो यो यच्च सामवचनं यच्चानुगमनं प्रायोपवेशनं वा धनिकस्य स धर्म ऋणोद्ग्राहणोपाय इत्यर्थः । व्यवहारे कात्यायनः।

धार्य्योवरुद्ध ऋणिकः प्रकाशं जनसंसदि ।
यावन्न दद्याद्देयं च देशाचारस्थितिर्यथा ॥

यावद्दानं जनसंसदि ऋणिकस्य धनिकेन धारणं व्यवहार इत्यर्थः । छलाचरितबलात्कारेषु बृहस्पतिः ।

छद्मना याचयित्वार्थमानीय ऋणिकाद्धनी।
अन्वाहितादि चाहृत्य दाप्यते यत्र सोपधिः ॥

ऋणिकस्य धनमन्वाहितादिना छद्मना आहृत्य वा यत्र दाप्यते तत्र साधनोपायसोपधिः सच्छलमुच्यत इत्यर्थः ।

पुत्रदारपशून्बध्वा कृत्वा द्वारोपवेशनम् ॥
यत्रर्णी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते ।
बध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः ॥
ऋणिको दाप्यते यत्र बलात्कारः स उच्यते ।

पुत्रदारोपरोधद्वारोपवेशनं च य उद्ग्राहणोपायस्तदाचरितमुच्यते इति पूर्ववचनार्थः। द्वितीयवचनस्य तु स्वगृहमानीय ताडनादिलक्षण उद्ग्राहणोपायो बलात्कार उच्यते इत्यर्थः ॥ इदानीं कोऽधमर्णः केनोपायेन साध्यस्तदाह कात्यायनः ।

राजानं स्वामिनं विप्रं स्त्रियं नैव प्रसाधयेत् ।
ऋक्थिनं दुर्हृदं वापि च्छलेनैव प्रसाधयेत् ॥
ऋक्थिनं दायादं । तथा ।
वणिजः कर्षकांश्चैव शिल्पिनश्चाब्रवीद्भृगुः ।
देशाचारेण दाप्याः स्युर्दुष्टान्संपीड्य दापयेत् ॥

वणिजादीनधिकृत्य देशाचारेण दाप्याः स्युरिति भृगुरब्रवीदित्यर्थः । यत्र धारणेपि धनं न लभ्यते तत्राह बृहस्पतिः ।

निर्धनं ऋणिकं कर्म गृहमानीय कारयेत् ।
शौंडिकाद्यं ब्राह्मणस्तु दापनीयः शनैःशनैः ॥

याज्ञवल्क्यः ।

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥

ऋणार्थं ऋणनिस्तारार्थं यथोदयं यथाधनोत्पत्तीति

रत्नाकरः। उत्तमर्णापेक्षया अपकृष्टजातिमृणशोधना-समर्थं स्वजात्यनुरूपं कर्म कारयेत्। ब्राह्मणः पुनस्तथाविधः कुटुंबाविरोधेन यथासंभवं दापनीय इति दीपकलिका। व्यापारद्वारा ऋणशोधनं न ब्राह्मणस्य। यथा कात्यायनः।

कर्मणा क्षत्रविट्शूद्रान्समहीनांस्तु दापयेत्।

कर्मणा व्यापारद्वारा यत्र ब्राह्मणतया उत्तमर्णाधमर्णौ तत्र त्याज्यौ ब्राह्मणत्वावच्छेदेनैव शनैर्दाप्य इति वाक्यादिति रत्नाकरः। यद्युत्तमर्ण ऋणमोचनार्थमादावपरिभाषितं निंदितं कर्म कारयेत् तदासौ राज्ञा पूर्वसाहसं दंड्यः। ऋणिकश्च ऋणान्मुच्यते इत्याह कात्यायनः

यदि ह्यादावनादिष्टमशुभं कर्म कारयेत्।
प्राप्नुयात्साहसं पूर्वमृणान्मुच्येत वर्णिकः॥

वाचस्पतिमिश्रेण प्रथमत एवबलात्कारे दंडमाह कात्यायन इत्याभाष्य यदिवादायनादिष्टमिति पठितं यदादावृणिकं गर्हितं कर्म ऋणनिर्यातनाय धनिकः कारयेत् तदा सः पूर्वसाहसं दंड्यः ऋणिकश्च ऋणान्मुच्यते इति व्याख्यातम्।

अथ शक्तिविहीनः स्यादृणी कालविपर्ययात्।
शक्त्यपेक्ष्यमृणं दाप्यं काले काले यथोदयम्॥

शक्तिविहीनस्य ऋणं दातुमित्यादिकालविपर्ययाद्दुर्भिक्षादेः यदि परमवृद्धिं प्राप्तं धनमृणिको दातुं न शक्नोति तदा चक्रवृद्ध्या स्वेच्छया धारयेत्। यथा बृहस्पतिः।

पूर्णावधौ शांतलाभमृणमुद्ग्राहयेद्धनी ।
कारयेद्वा धनी लेख्यं चक्रवृद्धिव्यवस्थया ॥
शांतलाभं परमवृद्धिं प्राप्तं । बृहस्पतिः ।
द्विगुणस्योपरि यदा चक्रवृद्धिः प्रगृह्यते ।
भोगलाभस्तथा तत्र मूलं स्यात्सोदयमृणम् ॥

यत्र यत्र तत्र तत्रेत्यध्याहार्यं । तथा च यत्र चक्रवृद्धिर्गृह्यते तत्र यथा सोदयमृणं गुणस्योपरि भवति तथा भोगलाभोऽपीत्यर्थः । ऋण्यभावे स एव ।

हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।
द्रव्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम् ॥
रक्षेद्वा कृतमूल्यं तद्दशाहं जनसंसदि ।
ऋणानुरूपं गृह्णीयात्तदन्य त्तु विवर्जयेत् ॥
स्वधनं च स्थिरीकृत्य गणनाकुशलैर्नरैः ।
तद्बंधुज्ञातिविदितं प्रगृह्णन्न पराप्नुयात् ॥

नष्टे पलायनादिनाऽत्यंतादर्शनविषये तदीयं द्रव्यं बंधकरूपं तद्बंधुज्ञातिविदितं तदधमर्णविश्वासविषयविदितं । तद्धनं ज्ञातृविदितमिति विवादचिंतामणौ पाठः मनुः ।

यः स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णिकात् ।
स राज्ञा नाभियोक्तव्य स्वकं संसाधयन्धनम् ॥

यथाविषयं धर्मादीन्साधनोपायान्प्रयुंजानो न राज्ञा निवर्तनीयः इति तात्पर्यार्थः । याज्ञवल्क्यः

प्रतिपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ।

साध्यमानो नृपं गच्छन् दंड्यो दाप्यश्च तद्धनम् ॥

संप्रतिपन्नमर्थं उत्तमर्णः साधयन् यद्यधमर्णो राज्ञि निवेदयेत्तदा एतत् कथं करोषीति राज्ञा नो वक्तव्यः। बलादिना तु साध्यमानोधमर्णो यदि राज्ञे निवेदयेत् तदा तद्धनमुत्तमर्णस्य दाप्यं दंडः स्वयं ग्राह्य इति शूलपाणिः। बाच्यो निषेध्यः। प्रतिपन्नाऽङ्गीकृतर्ण इति चंडेश्वरः। यस्तु विप्रतिपन्नो न्यायवादी स नासेध्यः। तथा च बृहस्पतिः।

नासेद्धव्यः क्रियावादी संदिग्धेऽर्थे कथंचन।
आसेधयंस्त्वनासेध्यं दंड्यो भवति धर्मतः॥
प्रदातव्यं यद्भवति धर्मतस्तद्ददाम्यहम्।
एवं यत्रर्णिको ब्रूते क्रियावादी स उच्यते॥
रूपसंख्यादिलाभेषु यत्र भ्रांतिर्द्वयोर्भवेत्।
अदेयदेययोर्वापि संदिग्धार्थः प्रकीर्तितः॥

रूपे धनस्य रूपे सुवर्णरजतादौ संख्यायामियत्तायाम्। आदिपदादाध्यादौ। लाभे कलायां देयादेययोर्यत्र द्वयोरर्थिप्रत्यर्थिनोर्भ्रांतिर्विप्रतिपत्तिर्भवति सोऽर्थः संदिग्ध उच्यते। मनुः।

अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदितः।
दापयेद्धनिकस्यार्थमधमर्णविभावितम्॥

अस्यार्थः। अधमर्णात् यो लभ्यार्थस्तत्सिद्ध्यर्थमुत्तमर्णेन चोदितो राजा प्रकृतत्वाद्धनिकस्यार्थं प्रदापयेत्। अधमर्णविभावितमधमर्णलभ्यतया धनिकेनैव विभा-

वितं प्रमाणेन बोधितम् । यत्र तु दंडनीयो धनवान्म-
वति तत्र विवादविपयात् द्विगुणं धनं दंड्यः ।

यो यावन्निह्नवीतार्थं मिथ्या याचति वा वदेत् ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्विगुणं धनम् ॥

योभियुक्त आशयदोषेण निह्नवं करोति अभियोक्ता वा मिथ्याभियोगं करोति तावुभावपि अधर्मव्यवहारिणौ नृपेण विवादविपयाद्धनाद्दिगुणं दंडनीयाविति समुदितार्थः । यमः ।

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वा द्विगुणं ततः ॥

नारदः ।

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वांशं तु विंशकम् ॥

विंशकं विंशतितमभागं एप च गुरुलघुदंडविकल्पो दंडनीयगुणजातिशक्त्यपेक्षया द्रष्टव्यः । तथा ।

ऋणे देये प्रतिज्ञाते पंचकं शतमर्हति ।
अपह्नवे तद्विगुणं तन्मनोरनुशासनम् ॥

अस्यार्थः । आदौ विमते पश्चादनुमते शते पंचकं पश्चादपि विमते प्रमिते शते दशकं विमतौ राज्ञा दंड्यः इदं देव्याल्पधनविपयं । याज्ञवल्क्यः ।

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं हरेत् ॥
कारणे तु विशेपः स्याज्जितस्यैकतरस्य च ।

प्राङ्न्यायवादे च तथा जितस्यैकतरस्य तु ॥

मध्यपविधधनस्य मिथ्याकारणप्राङ्न्यायवादे त्विदं। विष्णुः ॥ उत्तमर्णश्चेद्राजानमियात्तद्विभावितोऽधमर्णो राज्ञे धनदशमभागं दंडं दत्वा दद्यात् प्राप्तार्थश्चोत्तमर्णो विंशतितममंशं। दद्यादित्यस्य ऋणमित्यादि। कात्यायनः।

नानर्णसमवाये तु यद्यत्पूर्वकृतं भवेत्।
तत्तदेवाग्रतो देयं राज्ञः श्रोत्रियतो न च ॥
एकाहे लिखितं यत्र तत्र कुर्यादृणं समम्।
ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम् ॥
यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत्।
तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥

अन्यद्रव्याभावे तस्यैव कृते तद्देयमित्यर्थः। याज्ञवल्क्यः।

दत्वर्णं पाटयेल्लेख्यं शुद्धे चान्यच्च कारयेत्।
साक्षिमच्च भवेद्यद्वा दातव्यं तत्ससाक्षिकम्॥

याज्ञवल्क्यः ॥

लेख्यस्य पृष्ठेभिलिखेद्दत्वादत्वा धनं ऋणी।
धनी चोपगतं दद्यात्स्वहस्तपरिनिष्ठितम् ॥

यदाऽधमर्णिकः सकलमृणं दातुमसमर्थः शक्त्यनुसारेण दत्वा पूर्वकृतस्य लेख्यस्य पृष्ठेऽभिलिखेत् एतावद्दत्तमुत्तमर्णेनोपगतं प्राप्तमिति धनी तस्यैव लेख्यस्य पृष्ठे दद्यादभिलिखेत् एतावन्मया लब्धमिति कथं स्वहस्तपरिचिन्हतं स्वहस्तलिखिताक्षरचिह्नितमित्यर्थ इति मिता-

क्षरा। समग्रऋणशोधनासामर्थ्ये यावद्धनं ददाति तावद्दणी लेख्यपृष्ठेभिलिखेत्। धनी च प्रायेण पत्रं दद्यात्। यथा विष्णुः॥ असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वलिखितं दद्यात्॥ इति शूलपाणिः। बृहस्पतिः।

धर्मादिनोद्ग्राह्य धनं यस्तूपरि न लेखयेत्।
न चैवोपगतं दद्यात्तस्य तद्वृद्धिमाप्नुयात्॥

अत्र वृद्धिर्हानिरिति कल्पतरुः। तस्याधमर्णस्य तद्दत्तं वृद्धिमाप्नुयात् सकलं भवेदिति प्राहुः। ऋणे तु कृत्स्ने दत्ते लेख्यं किं कर्त्तव्यमित्यत्र विशेषः प्रकीर्णे वक्ष्यते। इति विद्वद्विरचिते विवादार्णवसेतुके॥ वृद्धिभेदादिधर्मेण तृतीयोर्मिरियं गता॥ ३॥

चतुर्थोर्मिः।

अथ दायभागः॥ तत्राह नारदः।

विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते।
दायभाग इति प्रोक्तं तद्विवादपदं बुधैः॥

पितृत आगतं पित्र्यं पितृमरणपातित्याद्यधीनजातस्वत्वकमिति यावत्। पित्र्यस्येति। पुत्रैरिति च संबंधिमात्रोपलक्षणं। संबंधिमात्रधनविभागे दायपदप्रयोगात्। दायभागविवादपदमुपक्रम्य नारदेन मात्रादिधनविभागस्योपदर्शितत्वात्। पित्रादिपदमदत्त्वैव

एष स्त्रीपुंसयोरुक्तो धर्मो वो रतिसंज्ञितः।
आपद्यपत्यप्राप्तिश्च दायभागं निबोधत॥

इत्युपक्रम्य यावत्संबंधि धनविभागस्य मनुनाप्यु-

कत्वाच्च दीयत इति व्युत्पत्त्या दायशब्दो ददातिप्रयोगश्च गौणः। मृतप्रव्रजितादिस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिरूपफलसाम्यात्। ततश्च पूर्वस्वामिनःस्वत्वोपरमे पूर्वस्वामिसंबंधाधीनं यत्र द्रव्ये स्वत्वं तत्र निरूढो दायशब्दः तत्र मृतस्य पतितस्य उपरतस्पृहस्य तादृशधने प्रथमं पुत्रोधिकारी बहवश्चेत् पुत्राः समं विभजेरन्। एवमन्यत्रापि। तदभावे पौत्रः तदभावे प्रपौत्रः

पुंनाम्नो नरकायस्मात्त्रायते पितरं सुतः।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा॥

इति मनुवचनेन।

पुत्रेण लोकान् जयति पौत्रेणानंत्यमश्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्॥

इति वसिष्ठवचनेन।

लोकानंत्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः।

इति याज्ञवल्क्यवचनेन च पुत्रादीनां जन्मप्रभृतिपित्रादेः परलोकोचितमहोपकारकत्वप्रतिपादनेन धनभागित्वज्ञापनात्।

ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः।
पितॄणामनृणश्चैव स तस्माल्लब्धुमर्हति॥

इति मनुनोपकारकत्वेनैव स्फुटं धनाधिकारप्रतिपादनात् सत्स्वंगजेषु तद्गामी ह्यर्थो भवतीति बौधायनवचनान्मृतपितृकपौत्रमृतपितृपितामहकप्रपौत्रयोः पुत्रेण सह तुल्याधिकारः पार्वणपिंडदातृत्वेन उपकारा-

विशेषात्। जीवत्पितृकपौत्रजीवत्पितृपितामहकप्रपौत्रयोर्नाधिकारः पार्वणपिंडदानाभावेनोपकारकत्वाभावात्। एषामभावे विभक्ताविभक्तस्थावरादिधने पत्नी त्वधिकारिणीति श्रीकृष्णतर्कालंकारस्मार्तभट्टाचार्यजीमूतवाहनप्रभृतयः प्राहुः। विभक्तधने पत्नी अधिकारिणी। अविभक्तधने भ्रात्रादयः क्रमेणाधिकारिणः पत्नी तु ग्रासाच्छादनमात्रभागिनी इति तु मिश्राः। धर्मपरायणा सती पत्न्यधिकारिणी।

अपुत्रा शयनं भर्तुः पालयंती व्रते स्थिता।
पत्न्येव दद्यात्तत्पिंडं कृत्स्नमंशं लभेत च॥

इति बृहन्मनुवचनात्।

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुतो गोत्रजो बंधुः शिष्यः सब्रह्मचारिणः॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥

इति याज्ञवल्क्यवचनाच्च पतिस्वर्गार्थं गुणवद्विप्रेभ्यो दानमप्यनुमतम्

तत्तद्गुणवते देयं पतिप्राणनकाम्यया॥

इति वचनात्।

स्त्रीणां स्वपतिदायस्तु उपभोगफलः स्मृतः।
नापहारं स्त्रियः कुर्युः पतिवित्तात्कथंचन॥

इति वचनाच्च।अपहारश्च धनस्वाम्यनुपयोगे भवति अत एव वर्तनाशक्तौ आधानं विक्रयणमप्यनुमतं देह-

नाशे उपकारविलोपात् तस्याः पतिपक्षपरतंत्रता। न तु स्वातंत्र्यम्।

मृते भर्तर्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः।
विनियोगेऽर्थरक्षायां भरणे तु स ईश्वरः॥

इतिवचनात्। तदभावे पितृपक्षः प्रभुः।

परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये।
तत्सपिंडेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः॥

इति वचनात्। पत्नी चाधुना सवर्णैव कलावसवर्णविवाहनिषेधात्। अस्या एव धनभागित्वम्।

अपुत्रा शयनं भर्तुः पालयंती गुरौ स्थिता।
पत्न्येव दद्यात्तत्पिंडं कृत्स्नमंशं लभेत च॥

इति वचनात्॥ इति पत्न्यधिकारः॥ पत्न्यभावे कुमारी धनाधिकारिणी

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।
तस्यामात्मनि जीवंत्यां कथमन्यो धनं हरेत्॥

इति मनुवचनात्। अपुत्रस्य मृतस्य कुमारी ऋक्थं गृह्णीयात्। तदभावे चोढेति पराशरवचनाच्च। तत्रायं विशेषः। कन्या जाताधिकारा पश्चात् परिणीता अविद्यमानपुत्रा यदि मृता तदा तत्पितृदाये सपुत्रायाश्च भगिन्यास्तुल्याऽधिकारो न तु तद्भर्त्रादीनां स्त्रीधन एव तेषामधिकारात्। तदभावे पुत्रवती संभावितपुत्रा च तुल्याधिकारिणी। एतयोरेकतराभावे अन्यतराधिकारिणी।

पुत्राभावे तु दुहिता तुल्यसंतानदर्शनात् ।
पुत्रश्च दुहिता चोभे पितुः संतानकारिके ॥
इति वचनाच्च ।
सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता ।
कृताकृतावाऽपुत्रस्य पितुर्धनहरी तु सा ॥

इति वचनात् । स्वपुत्रद्वारा पार्वणपिंडदातृतया द्वयोरुपकाराविशेषाच्च । संतानश्च पिंडदोऽभिमतः अपिंडदस्यानुपकारकत्वेनान्यसंतानादसंतानाच्चाविशेषात् कृता पुत्रिका अकृता तदन्या अपुत्रस्यापत्नीकुमारीकस्येत्यपि बोध्यं पत्नीकुमार्योरभाव एव कुतः दुहित्रधिकारावगमात् । वन्ध्यापुत्रहीनविधवयोस्तु नाधिकारः स्वसत्तया स्वजन्यसत्तया च पार्वणपिंडदानाभावात् । किंतु तयोः पतिकुले वर्तनाभावे ग्रासाच्छादनभागित्वमिति । तयोरभावे दौहित्रः ।

अपुत्रपौत्रे संसारे दौहित्रा धनमाप्नुयुः
इति वचनात् ।
यथा पितृधनं स्वाम्यं तस्याऽसत्स्वपि बंधुषु ।
तथैव तत्सुतो ऽपीष्टे मातृमातामहे धने ॥

इति वचनाच्च । अत्रापुत्रपौत्रपदं दुहितृपर्यंताभावपरं । अन्यथा याज्ञवल्क्यवचनविरोधः स्यादिति श्रीकृष्णतर्कालंकारस्मार्तभट्टाचार्यजीमूतवाहनादयः प्राहुः। पुत्राद्यभाव एव दुहितृसत्त्वेपि दौहित्राधिकार इतिगोविंदराजस्तच्चिंत्यं यथा येन दौहित्रदेयपिंडेन दुहिता पि-

तृधनाधिकारिणी तथैव तेनैव पिंडदानेन दुहितृसुतोऽपि मातामहधने स्वामी सत्स्वपि पित्रादिष्वित्यर्थः। तदभावे पिता तदभावे माता। प्रागुक्तयाज्ञवल्कीयात्। अनपत्यस्य धनं पत्न्यभिगामि। तदभावे दुहितृगामितदभावे दौहित्रगामि तदभावे पितृगामि तदभावे मातृगामि इति विष्णुवचनात्। तदभावे भ्रातरः।

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुतो गोत्रजो बंधुः शिष्यः सब्रह्मचारिणः॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥

इति याज्ञवल्कीयात्। प्रागुक्तविष्णुस्मृतेश्च। तत्रापि प्रथमं सोदरः "सोदरस्य तु सोदर" इति वचनात्। धनिभोग्यपित्रादित्रिकपिंडदानाद्धनिमातामहादिभोग्यपिंडदानाच्च। तदभावे वैमात्रेयः तद्भोग्यपित्रादिपिंडत्रयदातृत्वात्। अत्रापि वैमात्रेयस्य संसृष्टत्वे सोदरस्यासंसृष्टत्वे तयोस्तुल्याधिकारः सोदरासोदरयोः संसृष्टत्वे सोदरः सोदराणामेकतरस्य संसृष्टत्वे अपरस्यासंसृष्टत्वे संसृष्टसोदर एव गृह्णीयात्।

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः।
दद्याच्चापहरेदंशं जातस्य च मृतस्य च॥
अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत्।
असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृजः॥

इति याज्ञवल्कीयात्। असंसृष्ट्यपि सोदरो गृह्णी-

यात्। सोदरपदमनुवर्तते नान्यमातृज एव संसृष्टो गृह्णीयात् संसृष्टपदमेव वा सोदरमभिधत्ते अत एव वृद्धयाज्ञवल्क्यवचनं "सोदरो नान्यमातृज" इति जितेंद्रियेण लिखितं। तदा च पूर्वार्द्धस्य संसृष्टीत्यनुवर्तते तेन न केवलमन्योदर्य एव संसृष्टी गृह्णीयात् किंतु संसृष्टचपि सोदर इत्यर्थः। तेनासंसृष्टिना सोदरेण संसृष्टिना असोदरेण च विभज्य गृहीतव्यं। अविभक्तस्थावराणां तु सोदरत्वासोदरत्वानादरेण सर्वैरेव समं विभजनीयं यथा यमः

अविभक्तं स्थावरं यत्सर्वेषामेव तद्भवेत्।
विभक्तं स्थावरं ग्राह्यं नान्योदर्यैः कथंचन॥

सर्वेषां सोदरासोदराणामित्यर्थः भ्रातृपुत्रे चेयं रीतिरनुसर्तव्या। तदभावे भ्रातृपुत्रः तत्रापि प्रथमं सोदरभ्रातृपुत्रः न तु वैमात्रेयभ्रातृपुत्रोऽपि तद्दत्तधनिपितृपितामहपिंडे धनिमातृपितामहीभोग्यत्वाभावेन सोदरभ्रातृपुत्रापेक्षया तस्यात्यंतोपकारकत्वात्।

स्वेन भर्त्रा सह श्राद्धं माता भुंक्ते स्वधामयम्।
पितामही च स्वेनैव स्वेनैव प्रपितामही॥

इत्यादिषु पित्रादिपिंडे पिंडदातुर्मात्रादीनां भोगश्रुतेः तदभावे वैमात्रेयभ्रातृपुत्रः तदभावे गोत्रजः। तत्रायं क्रमः। भ्रातृपौत्रः प्रागुक्तयाज्ञवल्कीयात् धनिनः पितुः पिंडदातृत्वात् सपिंडत्वाच्च। अत्रापि सोदरवैमात्रेयभ्रातृपुत्रवत् क्रमो बोध्य इति श्रीकृष्णतर्कालंकारः। तद-

भावे पितृदौहित्रः धनिनः पित्रादिपिंडत्रयदानात् तदभावे पितामहः दौहित्रांतस्वसंतानाभावे पितुरधिकारवत् दौहित्रांतपितृसंतानाभावे पितामहाधिकारस्य सांदृष्टिकन्यायसिद्धत्वात्। धनिभोग्यप्रपितामहपिंडदातृत्वाच्च। तदभावे पितामही।

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।
मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्॥

इति मनुवचनात्। यथा पित्राभावे माता तथा पितामहाभावे पितामहीति सांदृष्टिकन्यायेन पितामहात्परं पितामह्या अधिकार इत्यर्थः तदभावे पितृव्यः धनिभोग्यपितामहप्रपितामहपिंडदातृत्वात्। तदभावे पितृव्यपुत्रः तस्यापि धनिभोग्यपितामहप्रपितामहपिंडदातृत्वात्। तदभावे पितृव्यपौत्रे धनिभोग्यपितामहपिंडदातृत्वात्। तदभावे पितामहदौहित्रः धनिभोग्यपितामहप्रपितामहपिंडदातृत्वात् न च धनिभोग्यपिंडद्वयदातृत्वेन धनिभोग्यपिंडैकदातुः पितृव्यपौत्रादस्योपकाराधिक्यमिति वाच्यं पितृव्यपौत्रस्य सपिंडत्वेन बलवत्त्वात्। अत्र पितामहदौहित्राभावे पितृव्यदौहित्रः धनिभोग्यतत्पितामहपिंडदातृत्वादिति श्रीकृष्णतर्कालंकार आह तच्चिंत्यं। तदभावे प्रपितामहः तदभावे प्रपितामही। प्रागुक्तसांदृष्टिकन्यायसिद्धत्वात्। तदभावे प्रपितामहपुत्रः तदभावे प्रपितामहपौत्रः तदभावे तत्प्रपौत्रः तेषामपि धनिभोग्यतत्प्रपितामहपिंडदातृत्वात्। तदभावे प्रपिता-

महद्दौहित्रः धनिभोग्यप्रपितामहपिंडदातृत्वात् ॥ तदभावे मातामहः । तदभावे मातुलः तदभावे तत्पुत्रः तदभावे । तत्पौत्रः मनुना-

त्रयाणामुदकं कार्य्यं त्रिषु पिंडः प्रवर्तते ।
अनंतरः सपिंडाद्यस्तस्यतस्य धनं भवेत् ॥

इत्याभ्यां वचनाद्धाभ्यामुपकारानंतर्यक्रमेणाधिकारप्रतिपादकाभ्यां तेषामधिकारप्रतिपादनाद्दायभागप्रकरणे तयोरभिधानस्योपकारक्रमेण धनाधिकारज्ञापनैकप्रयोजनकत्वात् । अन्यथा एतदकरणे तदुपादानवैयर्थ्यं स्यात् । तदभावे वृद्धप्रपौत्रः । तदभावे ऽतिवृद्धप्रपौत्रः । तदभावे ऽत्यतिवृद्धप्रपौत्रः । तेषां मृतभोग्यलेपदातृत्वात् । तदभावे वृद्धप्रपितामहः । तदभावे तत्पुत्रः । तदभावे तत्पौत्रः । तदभावे तत्प्रपौत्रः । तदभावे वृद्धप्रपितामहदौहित्रः । तदभावे अतिवृद्धप्रपितामहः । तदभावे तत्पुत्रः । तदभावे तत्पौत्रः । तदभावे तत्प्रपौत्रः । तदभावे अतिवृद्धप्रपितामहदौहित्रः । तदभावे अत्यतिवृद्धप्रपितामहः । तदभावे तत्पुत्रः । तदभावे तत्पौत्रः । तदभावे तत्प्रपौत्रः । तदभावे ऽत्यतिवृद्धप्रपितामहदौहित्रः ।

बहवो जातयो यत्र सकुल्या बांधवास्तथा ।
यो ह्यासन्नतरस्तेषां सो ऽनपत्यधनं हरेत्॥

इति बृहस्पतिवचनात् । आसन्नतरत्वं च उपकारतारतम्येन-- 'त्रयाणामुदकं कार्य्यम्' इति प्रागुक्तव-

चनात्। अनन्तरः सपिंडाय इति प्रागुक्तमनुवचनाच्च। तदभावे समानोदकाः सकुल्यपदेनैव ते उपात्ता मंतव्याः। तदभावे बृहस्पत्युक्तबांधवा इत्यनेन आत्मपितृमातृबांधवा यथाक्रमं धनाधिकारिणो मंतव्याः। तदभावे आचार्यः। तदभावे वेदाद्यध्याप्यशिष्यः। आचार्यः शिष्य एव च इति। मनुना क्रमेण तयोरधिकारप्रपादनात्। तदभावे सब्रह्मचारी सतीर्थ्यः 'सब्रह्मचारिण' इति याज्ञवल्क्यवचनात्। तदभावे स्वग्रामस्थाः सगोत्राः। तदभावे तथाविधाः समानप्रवराः पिंडगोत्रार्षसंबंधाः ऋक्थं हरेयुरिति वचनात्। तदभावे स्वग्रामस्थाः त्रैविद्यत्वादिगुणयुक्ता ब्राह्मणाः। एतेषामभावे क्षत्रियादीनां धने राजा ब्राह्मणधनवर्ज राजगामीति वचनात्। ब्राह्मणनां तु।

सर्वेषामप्यभावे तु ब्राह्मणा धनहारिणः।
त्रैविद्याः शुचयो दांता एवं धर्मो न हीयते॥

इति मनुवचनात्। ग्रामांतरस्थस्य ब्राह्मणस्याधिकार इति॥

अथ वानप्रस्थयतिब्रह्मचारिणां धनभागिनः। तत्र नैष्ठिकस्य ब्रह्मचारिणो धने आचार्योऽधिकारी यतिधने सच्छिष्योऽध्यात्मशास्त्रप्रबलधारणतदनुष्ठानदक्षोऽधिकारी वानप्रस्थधने धर्मभ्रात्रेकतीर्थोऽधिकारी।

वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः॥

इति याज्ञवल्क्यवचनात्। क्रमेण प्रतिलोमक्रमेणेत्यर्थः॥

**अथ स्त्रीधनाधिकारिणः।** तत्रादौ स्त्रीधनं निरूप्यते। तत्र विष्णुः।

पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम्।
आधिवेदनिकं बंधुदत्तं शुल्कान्वाधेयकम्॥

इति स्त्रीधनम्। अन्वाधेयमाह कात्यायनः।

विवाहात्परतो यच्च लब्धं भर्तृकुलास्त्रिया।
अन्वाधेयं तदुक्तं च लब्धं बंधुकुलात्तथा॥
ऊर्ध्वं लब्धं च यत्किंचित्संस्कारात्प्रीतितः स्त्रिया।
भर्तुः पित्रोः सकाशाद्वा अन्वाधेयं तु तद्भृगुः॥

बंधुपदेन मातापित्रोरुपादानं तेनायमर्थः भर्तृद्वारेण संबंधिनां श्वशुरादीनां मातापितृद्वारेण संबंधिनां मातामहपितामहादीनां च सकाशात् विवाहात्परतो यल्लब्धं धनं तदन्वाधेयमिति प्रथमवचनार्थः। विवाहात्परतो भर्तुः पित्रोर्वासकाशात् यल्लब्धं धनं तदप्यन्वाधेयमिति द्वितीयवचनार्थः। विष्णुवचने च बंधुपदं मातुलाद्यभिप्रायम्। पित्रादीनां स्वस्वपदेनैव निर्दिष्टत्वात्। मनुकात्यायनौ।

अध्यग्न्यध्यावाहनिकं दत्तं तु प्रीतितः स्त्रियै।
मातृभ्रातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्॥

तथा नारदः।

अध्यग्न्यध्यावाहनिकं भर्तृदायस्तथैव च।

भ्रातृदत्तं पितृभ्यां च षड्विधं स्त्रीधनं स्मृतम् ॥

तद्व्याकुरुते कात्यायनः ।

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसंनिधौ ।

तदध्यग्निकृतं सद्भिः स्त्रीधनं तु प्रकीर्तितम् ॥

यत्पुनर्लभते नारी नीयमाना हि पैतृकात् ।

अध्यावाहनिकं नाम तत्स्त्रीधनमुदाहृतम् ॥

विवाहकालश्च वृद्धिश्राद्धादिप्रत्यभिवादनांतकालः तत्काललब्धमेव धनं यौतुकं । युमिश्रणे इति धात्वनुसारेण । मिश्रता च स्त्रीपुंसयोरेकशरीररूपता यतो विवाहाद्भवति । तथा च श्रुतिः

अस्थिभिरस्थीनि मांसैर्मांसं त्वचा त्वचम्

इति। पैतृकादिति एकशेषेण पितृमातृकुल्याल्लभते यद्धनं भर्तृगृहं नीयमाना तच्चाध्यावाहनिकं भर्तृदायो भर्तृदत्तधनं भर्तृदायमनभिधाय मन्वादिभिर्भर्तृदत्तस्याभिधानात् । नारदेनापि भर्तृदत्तमनभिधाय भर्तृदायस्याभिधानात् । अन्यत्रापि भर्तृदत्ते भर्तृदायपदप्रयोगो दृष्टः ॥ यथा कात्यायनः ॥

भर्तृदायं मृते पत्यौ विन्यसेत्स्त्री यथेष्टतः ।

विद्यमाने तु संरक्षेत् क्षेपयेत्तत्कुलेऽन्यथा ॥

अस्यार्थः । भर्तृदत्तं धनं भर्तारि मृते यथेष्टं विनियुंजीत जीवति तु तद्रक्षेत् । अमुकहस्तताज्ञापनार्थमाह याज्ञवल्क्यः ।

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।

आधिवेदनिकं चैव स्त्रीधनं परिकीर्तितम् ॥

यच्च द्वितीयविवाहार्थिना पूर्वस्त्रियै पारितोषिकं धनं दत्तं तदाधिवेदनिकं अधिकस्त्रीलाभार्थत्वात्तस्य। तथा देवलः

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत्।
भोक्त्री तत्स्वयमेवेदं पतिर्नार्हत्यनापदि ॥

वृत्तिरन्नाच्छादनं। शुल्कमाह कात्यायनः

गृहोपस्करवाह्यानां दोह्याभरणकर्मिणाम्।
मूल्यं लब्धं च यत्किंचिच्छुल्कं तत्परिकीर्तितम् ॥

स्त्रिया गृहादिकर्मरूपशिल्पिस्वभर्तृद्वारेण गृहादिनिष्पादनादुत्कोचविधयान्येभ्यो यल्लब्धं तच्छुल्कं तदेव मूल्यं भर्तृप्रेरणार्थत्वात्। उपस्कारो मार्जनी। वाह्या बलीवर्दादयः। दोह्या धेनवः। लाभो निध्यादेः। तथा व्यासः

विवाहकाले यत्किंचिद्वरायोद्दिश्य दीयते ।
कन्यायास्तद्धनं सर्वमविभाज्यं च बंधुभिः ॥

उद्दिश्येति कन्याया इदं भवतु इति उद्दिश्य यद्वराय दानं न पुनस्तदभिसंधिं विनापीत्यर्थः अत एव विवाहकाले इति प्रदर्शनार्थं न पुनरेतदेव प्रयोजकं दानभिसंधिनिमित्तत्वात्। सुतस्य तथा च प्रामाणिकं वचनम्।

यद्दत्तं दुहितुः पत्ये स्त्रियमेव तदन्वियात्।
मृते जीवति वा पत्यौ तदपत्यमृते स्त्रियाः ॥

विवाहे इति न विशिनष्टि अभिसंधिस्तु दुहित्रन्वयाभिधानादेव लब्धत्वान्नोक्तः। तदेवमव्यवस्थितं सत्य-

स्त्रीधनकीर्तनात् न षट्संख्या विवक्षिता किंतु स्त्रीधनकीर्तनपराणि मुनिवचनानि। तदेव च स्त्रिया धनं यत्र भर्तृतः स्वातंत्र्येण दानविक्रयभोगान्कर्तुमधिकरोति तदिदं संक्षिप्याह कात्यायनः।

शिल्पैर्लब्धं तु यद्वित्तं प्रीत्या चैव यदन्यतः।
भर्तुः स्वाम्यं भवेत्तत्र शेषं तु स्त्रीधनं स्मृतम्॥

अन्यत इति पितृमातृभर्तृकुलव्यतिरिक्तायल्लब्धं शिल्पेन चित्रकर्मसूत्रकर्तनादिना यदर्जितं तत्र भर्तुः स्वाम्यं स्वातंत्र्यम्। अनापद्यपि भर्ता गृहीतुमर्हतीति तेन तदुभयधनस्य स्त्रीस्वामिकत्वेपि न तस्याः स्वातंत्र्यविषयः। किं तु वचनबलात् भर्तुरेव स्वातंत्र्यविषयः। तथा च स्त्रिया तद्धनविनियोगे भर्त्रनुमत्यपेक्षेति स्त्रीधनं स्मृतं स्त्रिया स्वातंत्र्येण यथेष्टविनियोगार्हं स्मृतं तेन स्त्रिया अपि धनं न स्त्रीधनं अस्वातंत्र्यात्। एतद्द्वयधनातिरिक्तधनं तु स्त्रीधनम् स्त्रिया एव दानविक्रयाधिकारः। तदाह कात्यायनः।

ऊढया कन्यया वापि भर्तुः पितृगृहेथ वा
भर्तुः सकाशात् पित्रोर्वा लब्धं सौदायिकं धनम्।
सौदायिकं धनं प्राप्य स्त्रीणां स्वातंत्र्यमिष्यते।
यस्मात्तदानृशंस्यार्थं तैर्दत्तं तत्प्रजीवनम्॥
सौदायिके सदा स्त्रीणां स्वातंत्र्यं परिकीर्तितम्।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि॥

सुदायेभ्यः संबंधिभ्यो लब्धं धनं सौदायिकं आनृ-

शंस्यमनुकपा स्थावरेष्वपि भर्तृदत्तमात्रे स्त्रिया दानाय-नाधिकारः। तदाह नारदः।

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेपि तत्।
सा यथाकाममश्नीयात् दद्याद्वा स्थावरादृते॥

तत्र भर्तृदत्तेति विशेषणाद्भर्तृदत्तस्थावरादृते अन्य-स्स्थावरं देयमेव। अन्यथा यथेष्टस्थावरेष्वपीति वि-रुध्यते भर्त्ता यदि दुर्भिक्षादौ स्त्रीधनं विना वर्तनाक्षमः तदा गृहीतुमर्हति नान्यदा यदाह याज्ञवल्क्यः

दुर्भिक्षे धर्मकार्ये वा व्याधौ संप्रतिरोधके।
गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति॥

संप्रतिरोधके उत्तमर्णादिना स्वधनप्राप्त्यर्थं कृते स्ना-नभोजनादिप्रतिबंधे अन्यत्र पुनरनधिकारमाह कात्या-यनः

न भर्त्ता नैव च सुतो न पिता भ्रातरो न च।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः॥
यदि ह्येकतरोऽमीषां स्त्रीधनं भक्षयेद्बलात्।
स वृद्धिं प्रति दाप्यः स्याद्दंडं चैव समाप्नुयात्॥
तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम्।
मूलमेव स दाप्यः स्याद्यदा स धनवान्भवेत्॥
अथ चेत्स द्विभार्य्यः स्यान्न च तां भजते पुनः।
प्रीत्याभिसृष्टमपि चेत्प्रतिदाप्यः स तद्बलात्॥
ग्रासाच्छादनवासानामाच्छेदो यत्र योषितः।
तत्र स्वमाददीत स्त्री विभागमृक्थिनां तथा॥

सवृद्धिमिति बलाद्गृहीतस्त्रीधनरूपपदार्थमिति शेषः । अतो न स्त्रीधनविशेषणं तथा सति सवृद्धीत्येव साधुः स्यादिति मूलमेवेत्येवकारेण वृद्धिव्यवच्छेदः स्त्रिया धनं गृहीत्वा यदि अपरभार्य्यया सह वसति तां चावजानीते तदा गृहीतधनं राज्ञा बलाद्दापयितव्यः । भक्ताच्छादनादिकं यदि भर्ता न ददाति तदा तदपि स्त्रिया स्वयमाकृष्य गृहीतव्यं भर्त्तरि मृते तत्प्राप्तियोग्यांशं ऋक्थानां देवरादीनां सकाशादाददीत इत्यर्थः । कात्यायनः

अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिनी ।
व्यभिचाररता या च न च स्त्रीधनमर्हति ॥

इति स्त्रीधनलक्षणम् ॥

तत्र कुमारीधने प्रथमं सोदरभ्राता अधिकारी तदभावे माता तदभावे पिता ।

ऋक्थे मृतायाः कन्याया गृह्णीयुः सोदराः समम् ।
तदभावे भवेन्मातुस्तदभावे भवेत्पितुः ॥

इतिनारदीयात् । एतच्च कन्याया वरदत्तातिरिक्तविषयं । वरदत्तधने तु वरोऽधिकारी स्वं च शुल्कं वरो गृह्णीयात् इति पैठीनसिवचनात् ।

अथागच्छेत्समूढायां दत्तं पूर्ववरो हरेत् ।
मृतायां पुनरादद्यात् परिशोध्योभयव्ययम् ॥

इति नारदीयाच्च । यौतुकातिरिक्तस्त्रीधनेविवाहपूर्वापरकाले पितृदत्तातिरिक्ते स्त्रीधने च पुत्रकन्ययोस्तुल्याधिकारः ।

सामान्यं पुत्रकन्यानां मृतायां स्त्रीधने स्त्रियाम् ।
अप्रजायां हरेद्भर्त्ता माता भ्राता पितापि वा ॥
इति देवलीयपूर्वार्धात् ।
जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन्मातृकं ऋक्थं भगिन्यश्च सनाभयः ॥

इति विवादरत्नाकरकारधृतमनुवचनाच्च सामान्यं साधारणं समं ज्येष्ठोद्धारशून्यं भगिन्योत्राप्रमत्ता विवक्षिताः । तथा च बृहस्पतिः

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता चेत्समूढा तु लभते मानमात्रकम् ॥

अपत्यानां पुत्राणां तदंशिनी पुत्रस्य समांशिनी समूढायै मानानुसारिणा किंचिद्देयमिति चंडेश्वरः । जीमूतवाहनेन तु चतुर्थपादेन लभेन्मातृकं धनमिति पठितं। सनाभयः सहोदराः एतयोरन्यतराभावे अन्यतरस्यैव तदभावे चोढायास्तत्र पुत्रवत्याः संभावितपुत्रायाश्च तुल्योधिकारः स्वपुत्रद्वारेण पार्वणे

सपिंडीकरणादूर्ध्वं यत्पितृभ्यः प्रदीयते ।
सर्वेष्वंशहरा माता इति धर्मेषु निश्चयः ॥

इति शातातपोक्तत्द्योग्यपतिपिंडदानसंभवात् ॥ तथा च नारदः ॥

पुत्राभावे तु दुहिता तुल्यसंतानदर्शनात् ।

इति । तयोरन्यतराभावे अन्यतरस्यास्तदभावे पौत्रः तदभावे दौहित्रः पार्वणे तद्योग्यपतिपिंडदातृत्वात्

दौहित्रोपि ह्यमुत्रैनं संतारयति पौत्रवत्॥

इति मनुवचने दौहित्रे पौत्रधर्मातिदेशात् पुत्रेण परिणीतदुहितुर्बाधात् बाधकपुत्रेण बाध्यदुहितृपुत्रबाधस्य न्याय्यत्वाच्च। तदभावे प्रपौत्रः। तदभावे सपत्नीपुत्रः तदभावे सपत्नीपौत्रः। तदभावे सपत्नीप्रपौत्रः। एतेषां तद्योग्यापत्तिः पिंडदातृत्वात्। ततो वंध्या विधवा च तुल्यवदधिकारिण्यौ तयोरपि तत्प्रजात्वात्। प्रजासामान्याभाव एव भर्तुरधिकारात्।

अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि।

इति मनूक्तेः। एतयोरेकतराभावे चान्यतरस्याः तदभावे ब्राह्मादिविवाहपंचकविवाहिताया धने यौतुकवद्भर्तृमातृभ्रातृपितॄणां क्रमशोऽधिकारः। आसुरादित्रिकलब्धं तु यौतुकवत्। तयोरभावे माता तदभावे पिता तदभावे भर्ता एतत्पर्यंताभावे व्यवस्था वक्ष्यते। विवाहकाले तत्पूर्वापरकाले वा स्त्रियै यद्धनं पित्रा दत्तं तद्धने प्रथमं कुमार्यास्तदनंतरं ऊढायाः पुत्रवतीसंभावितपुत्रयोस्तदनंतरं च वंध्याविधवयोः सर्वदुहित्रभावे पुत्रादेर्यौतुकधनांतरवत्क्रमेणाधिकारः।

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन।

ब्राह्मणीतद्धरेत्कन्या तदपत्यस्य वा भवेत्॥

इति मनुवचनात्। अत्र पित्रादत्तमितिविशेषणात् विवाहसमयादन्यत्रापि यत्पितृदत्तं तत्प्रथमं कन्यायास्तदनंतरं तदपत्यस्य पुत्रस्येत्यर्थः ब्राह्मणीपदं चानुवादः

इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने।
सकायः पावयेत्तज्ज्ञः षड्वंश्यांश्च सहात्मना ॥
आसुरो द्रविणादानाद्गांधर्वः समयान्मिथः।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥

भर्तुरभावे भ्रातुः

बंधुदत्तं तथा शुल्कमन्वाधेयकमेव च।
अतीतायामप्रजायां बांधवास्तदवाप्नुयुः ॥

इति याज्ञवल्क्यवचनात्। अत्र बंधुपदेन मातापित्रोरुपादानात्। अत एव भ्रातरो बांधवाः।

पितृभ्यां चैव यद्दत्तं दुहितुः स्थावरं धनम्।
अप्रजायामतीतायां भ्रातृगामि तु सर्वदा ॥

इति कात्यायनैकवाक्यत्वात्। अत एव स्थावरग्रहणाद्दंडापूपन्यायेनापरधनस्यापि लाभ इति श्रीकृष्णतर्कालंकारादयः। सर्वदापदेन ब्राह्माद्यष्टविवाहपरिग्रहः। तदभावे माता अधिकारिणी तदभावे पिता। भगिनी शुल्कं सोदर्या ऊर्ध्वं मातुः पितुः ततः पूर्वं चैके। इति कात्यायनवचनात्। अस्यार्थः। भगिनीशुल्कं प्रथमं सोदर्याणां तेषामभावे मातुः तदभावे पितुः पूर्वं चैके इति परमतं। सपत्नीप्रपौत्रपर्यंताभावे आसुरराक्षसपैशाचविवाहत्रिकलब्धं तु स्त्रीधनं जीवत्यपि भर्तरि माता गृह्णीयात्। तदभावे पिता

यद्यस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु।
अतितायामप्रजायां मातापित्रोस्तदिष्यते ॥

इति वचनात् क्रमावगते युगपदधिकारे पित्रोरित्यभिदद्यात्। कन्याधने च मातुरभावे पितुरधिकारश्रवणात्। अत्रापि तथात्वस्य युक्तत्वात् पित्रभावे भ्रातुरधिकारः एषां पुनरभावे तद्धनं भर्तुः। यथा कात्यायनः।

बंधुदत्तं च बंधूनामभावे भर्तृगामि तत्।

माता पिता च बंधूनामभावे। इत्यनेन भ्रातुरभाव इत्यपि सूचितं ततो ब्राह्मादिविवाहपंचकलब्धयौतुकधनेषु पितृपर्यंताभावे आसुरादिविवाहत्रिकलब्धयौतुकधनेषु भर्तृपर्यंताभावेऽन्येषु सत्सु सर्वेष्विदमुच्यते। तत्र बृहस्पतिः।

मातुः स्वसा मातुलानी पितृव्यस्त्री पितृस्वसा।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः॥
एतासामौरसो न स्यात्सुतो दौहित्र एव वा।
तत्सुतो वा धनं तासां स्वस्रीयाद्या अवाप्नुयुः॥

औरसपदं कन्यापुत्रोभयपरम्। सुत इति सपत्नीपुत्रपरं न त्वौरसविशेषणं वैयर्थ्यात्। सपत्नीपुत्रसद्भावे स्वस्रीयाद्यधिकारापत्तेश्च। तत्सुत इति पौत्रपरं न तु कन्याकन्यादौहित्रोभयपरमपि कन्यापुत्रस्य दौहित्रपदेनैवोपात्तत्वात्। दौहित्रसुतस्य च स्वभोग्यभर्तृपिंडदानानधिकारात्। वाशब्दात् प्रपौत्रसपत्नीप्रपौत्रयोः समुच्चयः। अत्र पिंडदानविशेषेणैव भगिनीसुतादीनां षण्णामधिकारक्रमः प्रत्येतव्यः। पाठक्रमादर्थक्रमस्य बलवत्त्वात्. अन्यथा सर्वशेषे देवरादेरधिकारे सर्वजनविरोधः स्यात्

तत्र प्रथमे देवरः तत्पिंडतज्जर्तृपिंडतज्जर्तृदेयपुरुषत्रयपिं-
डदातृत्वात् सपिंडत्वाच्च ज्येष्ठभ्रातृस्त्रीधनेऽधिकारी। त-
दभावे देवरभ्रातृश्वशुरसुतौ (?)तुल्याधिकारिणौ तत्पिंड-
तज्जर्तृपिंडतज्जर्तृदेयपुरुषद्वयपिंडदातृत्वात्सपिंडत्वाच्च तद-
भावे स्वभगिनीपुत्रः तत्पिंडतत्पुत्रदेयतत्पित्रादिपुरुष-
त्रयपिंडदत्वात्। तदभावे भर्तृभागिनेयः पुत्रात् भर्तृदु-
र्बलत्वेन तत्स्थानपातिनोरपि भगिनीपुत्रभ्रातृभागिने-
ययोस्तथैव बलाबलस्य न्याय्यत्वात् तज्जर्तृदेयपुरुषत्रय-
पिंडदातृत्वात्तत्पिंडदानात्तज्जर्तृपिंडदानाच्च। तदभावे स्व-
भ्रातृपुत्रः तत्पिंडतत्पुत्रदेयपित्रादिपिंडद्वयदातृत्वात्।
तदभावे स्वजामाता श्वशुरयोः पिंडदानात् एषां षण्णां
पुनरभावे श्वशुरभ्रातृश्वशुरादेः स्वपिंडानंतर्यक्रमेणाधि-
कारः। तदभावे अधस्तनसकुल्यानामधिकारः तदभावे
ऊर्ध्वतनसकुल्यानामधिकारः तदभावे समानोदकाः।
तदभावे सगोत्राः। तदभावे समानप्रवराः। तदभावे
ब्राह्मणीधने स्वग्रामस्थश्रोत्रियादेरधिकारः। क्षत्रिया-
दिधने तु राज्ञ एवाधिकारः। इति स्त्रीधनाधिकारिणः॥

अथ विभागानधिकारिणः कथ्यंते॥

तत्पर्युदासेनाधिकारिज्ञापनार्थं क्लीबपतितजन्मांधज-
न्मबधिरोन्मत्तजडमूकनिरिंद्रियपितृद्विट्पंडोपपातक्य-
पयात्रितविकर्मस्थपतितापुत्राचिकित्स्यरोगार्तकुष्ठिशा-
स्त्रशौर्यादिरहिततपोविज्ञानवर्जिताचारहीनलिंगिप्रव-
जितान्यायोपार्जितवित्तकपंग्वकमोढासुतसगोत्रनियो-

गोत्पन्ना एतेनाधिकारिणः

मृते पितरि न क्लीबकुष्ठ्युन्मत्तजडांधकाः।
पतितः पतितापत्यं लिंगी दायांशभागिन.॥
एषां पतितवर्ज्येभ्यो भक्तवस्त्रं प्रदीयते।
तत्सुताः पितृदायांशा लभेरन्दोषवर्जिताः॥

इति देवलीयात्।

पितृद्विट् पतितः पंडो यश्च स्यादौपपातिकः।
औरसा अपि नैतेंशं लभेरन् क्षेत्रजाः कुतः॥

इति नारदीयात्।

अनंशौ क्लीबपतितौ जात्यंधबधिरौ तथा।
उन्मत्तजडमूकाश्च ये च केचिन्निरिंद्रियाः॥

इति मानवीयात्।

शास्त्रशौर्यादिरहितस्तथोदानविवर्जितः।
आचारहीनः पुत्रस्तु मूत्रोच्चारसमस्तु सः॥

इति कात्यायनीयात्।

सर्व एव विकर्मस्था नार्हंति भ्रातरो धनम्॥

इति याज्ञवल्कीयात्।

पतितस्तत्सुतः क्लीबः पंगुरुन्मत्तको जडः॥
अंधोऽचिकित्स्यरोगार्तो भर्तव्यास्ते निरंशकाः॥

इति मनुवचनात्। सर्वे हि धर्मयुक्ता भागिनो भवंति यस्त्वधर्मेण द्रव्यं प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीतेत्यापस्तंबवचनात्।

अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते।

प्रव्रज्यावसितश्चैव न ऋक्थं तेषु कर्हिचित् ॥

इति कात्यायनीयाच्च । क्लीबः कात्यायनेनाभिहितो यथा।

न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति।
मेढ्रं चोन्मादशुक्राभ्यां हीनं क्लीबः स उच्यते ॥

जडो हिताहितावधारणाक्षमः इति मिश्राः । धर्मकार्येनिरुत्साह इति स्मार्ताः । लिंगी कपटव्रतधारी । पितृद्विट् पितरि जीवति तत्ताडनादिकृन्मृते तच्छ्राद्धादिविमुखः। वर्णानुच्चारको मूकः। निरिंद्रियः पाण्यादिविकलः । पंडो नपुंसकविशेषः। अपयात्रितः राजवधादिदोषेण बांधवैर्भिन्नोदकीकृतः । औपपातक इति पठित्वा नानोपपातकयुक्त इति व्याख्यातवन्तः स्मार्ताः । जात्यंधबधिरौ स्वभावतो न त्वागंतुकहेतोरंधबधिरौ जन्मावध्यंधबधिरावित्यर्थः। विकर्मस्थः श्रुतिस्मृतिनिषिद्धकर्मासकृत्कारी । पद्भ्यां न गच्छतीति पंगुरिति श्रीकृष्णतर्कालंकारः पदा न गच्छतीतिदायभागः । अक्रमोढासुतः हीनवर्णापरिणयनानंतरं उत्तमवर्णस्त्रीपरिणयने द्वयोरपि अक्रमोढात्वं तयोः पुत्रः । सगोत्रान्नियोगेनोत्पन्नः अक्रमोढायामपि सवर्णेन परिणेत्रोत्पादितः पुत्रो धनाधिकारी । क्रमोढायामपि असवर्णजातेऽपि। तदाह कात्यायनः ।

अक्रमोढासुतस्त्वृक्थासवर्णश्च यदा पितुः ।
असवर्णः प्रसूतश्च क्रमोढायास्तु यो भवेत् ॥
प्रतिलोमप्रसूतायास्तस्याः पुत्रो न ऋक्थभाक् ।

सोपि सवर्णश्चेदधिकारी। एतेषां मध्ये पतितभिन्ना ग्रासाच्छादनैर्बिभृयुरंधजडक्लीबव्यसनिव्याधितादींश्चाकर्मिणः पतिततज्जातवर्जं तत्पुत्राः पातित्यादिदोषरहिताश्चेदधिकारिणः। कन्याश्च विवाहपर्यंतं भर्त्तव्याः अपुत्रा योषितश्च साधुवृत्तयो भर्त्तव्याः व्यभिचारिण्यः प्रतिप्रतिकूलाश्च निर्वास्याः। यथा

अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च।
सुताश्चैषां प्रभर्त्तव्या यावन्न भर्तृसात्कृताः।
तत्सुताः पातित्यादिदोषरहिताश्चेदधिकारिणः।

॥ अथ विभाज्यमविभाज्यं चोच्यते ॥

तत्र च पितृपितामहाद्यार्जितं साधारण संबंधेन साधारणव्यापारेण साधारणधनोपघातेनार्जितं च विभाज्यम्। यथा कात्यायनः

पैतामहं च पित्र्यं च यत्किंचित्स्वयमर्जितम्।
दायादानां विभागे तु सर्वमेतद्विभज्यते।

स्वयमर्जितमसाधारणप्रयोजकरूपव्यतिरेकेणेति चंडेश्वरः तेन साधारणधनोपघातादिनार्जितोर्जकस्य भागद्वये इतरेषामेकैकांशित्वम्

साधारणं समाश्रित्य यत्किंचिद्वाहनायुधम्।
शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः।
तस्य भागद्वयं प्रोक्तं शेषास्तु समभागिनः।

इति व्यासवचनात्। अत्र भ्रातर इत्युपलक्षणं पितृ-

न्यादयोपि बोद्धव्याः । तस्यार्जकस्य युक्तं चैतत् अर्जकस्य साधारणधनद्वारेण शरीरायासेन चानर्जकानां तु केवलसाधारणधनद्वारेणार्जितत्वात् । एवं यत्रैकेन शरीरव्यापारमात्रेण चासाधारणधनशरीरायासाभ्यामर्जितं धनं तत्र शरीरायासमात्रेणार्जकस्य एकांशित्वं धनशरीरायासाभ्यामर्जकस्य व्यंशित्वं न्यायसाम्यादिति श्रीकृष्णतर्कालंकारः। साधारणधनोपघातेऽपि यस्य यावतोंशस्याल्पस्य महतो वा उपघातस्तदनुसारेण भागकल्पना कार्येति जीमूतवाहनादयः प्राहुः । अनुपघातार्जितमर्जकस्यैव नेतरेषां। तत्रापि विद्यालब्धधने विशेषः वक्ष्यमाणवचनपटलात् । विद्यालब्धधने अनुपघातार्जितेपि समविद्याधिकविद्ययोरेकांशः । न्यूनविद्याविद्ययोर्नांशः ।

नाविद्यानां तु वैद्येन देयं विद्याधनं क्वचित् ।
समविद्याधिकानां तु देयं वैद्येन तद्धनम् ॥

इति कात्यायनीयात् । मध्यपठितविद्यापदमुभाभ्यां संबध्यते काकाक्षिन्यायात् तेन समविद्याधिकविद्यानामित्यर्थः । अत्रापि विशेषः । पितृपितामहपितृव्यभ्रात्रादिभ्यः प्राप्तविद्यानां विद्यालब्धधने न्यूनविद्याविद्ययोरप्येकैकांशः । यथा कात्यायनः

कुले विनीतविद्यानां भ्रातॄणां पितृतोपि वा ।
शौर्यप्राप्तं च तद्वित्तं तद्विभाज्यं बृहस्पतिः ॥

अपि वाशब्दाभ्यां पितामहपितृव्यादयः समुच्चिताः शौर्यप्राप्तं साधारणधनोपघातेन शौर्यार्जितं धनं सा-

धारणधनोपघातार्जितधनस्य विभाज्यताया उक्तत्वात् विद्यामभ्यस्यतो भ्रातुः कुटुंबं यद्यपरो भ्राता स्वासाधारणधनशरीरायासाभ्यां संवर्धयति तदा तद्विद्यार्जितधनेनास्य मूर्खस्याप्येकांशः

कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात्स लभेताश्रुतोपि सन् ॥

इति नारदीयात् । अश्रुतो मूर्खः। तत्र विद्याधनमाह कात्यायनः

उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्यात्तद्विभागेन युज्यते ॥
शिष्यादार्त्विज्यतः प्रश्नात् संदिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादाल्लब्धमध्ययनाच्च यत् ॥
विद्याधनं तु तत्प्राहुर्विभागे तन्न युज्यते ।
शिल्पेष्वपि च धर्मोयं मूल्याद्यच्चाधिकं भवेत् ॥
परं निरस्य यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥

एतेषामर्थः यदि भवान्भद्रकमुपन्यस्यति तदा भवते एतावद्धनं दातव्यमिति पणितं तद्भद्रोपन्यासेन यत्पणितं लब्धं धनं तन्न विभाज्यं तथा शिष्यादध्यापितात् ऋत्विक्कर्मकरणेन यजमानाद्वा दक्षिणादिरूपं धनं यल्लब्धं यच्च किंचिद्विद्यायां प्रश्ने कृते तत्र सम्यगुत्तरेण परितोषादपणितमेव यत्किंचिद्धनं ददाति तथा सन्दिग्धप्रश्ननिर्णयात् संदिग्धार्थस्य निश्चयायार्थं प्रश्ने कृते

तन्निर्णयजननात् यो ह्यस्मिन् शास्त्रार्थे मम संशयमपनयति तस्मै सुवर्णादिकमिदं दास्यामीत्युक्ते तस्य संशयमपनीय यल्लब्धं अथ वा वादिप्रतिवादिनोः कुत्रचिद्विवादविषये संदेहे न्यायकरणार्थमागतयोः सम्यङ्निरूपणेन यल्लब्धं तथा स्वज्ञानशंसनात् शास्त्रादिषु स्वज्ञानं प्रकाश्य प्रतिग्रहादिना यल्लब्धं तथा वादात् वादविचारे परं निर्जित्य यल्लब्धं। एकस्मिन् देये वस्तुनि बहूनां ब्राह्मणानां समुत्थाने येन प्रकृष्टवेदमधीत्य यल्लब्धं तथा शिल्पविद्यया चित्रकरसुवर्णकारादिभिर्यल्लब्धं तथा द्यूतेनापि परं निर्जित्य यल्लब्धं तत्सर्वं विद्याधनमविभाज्यमितरैः सहेति। अत्रापि विशेषमाह कात्यायनः

परभक्तोपयोगेन विद्याप्राप्तान्यतस्तु या
तया लब्धं धनं यत्तु विद्यालब्धं तदुच्यते॥

अन्यतः पितृव्यादितिरिक्ततः प्राप्तया कयाचिद्विद्यया साधारणधनोपघातमन्तरेण यदर्जितं तत्समविद्याधिकविद्यैरेव विभाज्यं न तु न्यूनविद्यादिभिरिति स्थितं पितृद्रव्योपघातेन पुत्रार्जितधनस्य पितुर्द्व्यंशः अर्जकस्याप्यंशद्वयं इतरेषामेकैकांशित्वं साधारणानुपघाते तु पितुरंशद्वयं। अर्जकस्यापि तावदेव इतरेषामनंशित्वं पितुर्गुणवत्त्वागुणवत्त्वाभ्यां वा अर्धहरत्वत्र्यंशित्वे इति दायभागः।

त्र्यंशहरोऽर्द्धहरो वा पुत्रवित्तार्जनात्पिता।

इति कात्यायनीयात् मयस्य प्रयोजनार्हं पुत्त-

कादि पितुर्द्रव्यांतरसत्त्वे तन्मूर्खादिभिः सह न विभजनीयम्॥

गोप्रचारस्य रथ्या च वस्त्रं यच्चांगयोजितम्।
प्रायोज्यं न विभज्येत शिल्पार्थं च बृहस्पतिः॥

इति कात्यायनवचनात् तन्मात्रद्रव्ये तु अंशानुसारेण तद्द्रव्यस्य मूल्यं ग्राह्यं। शौर्यधनं भार्याधनं प्रसादलब्धधनं साधारणधनोपघातं विनार्जितमेवमादीन्यविभाज्यानि

शौर्यभार्याधने चोभे यच्च विद्याधनं भवेत्।
त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः॥

इति नारदीयात्। न वास्तुविभागो नोदकपात्रालंकारोपयुक्तस्त्रीवाससामपां प्रचारार्थानां विभागश्चेति शंखलिखितवचनात्।

वस्त्रं पत्रमलंकारः कृतान्नमुदकं स्त्रियः।
योगक्षेमप्रचारश्च न विभाज्यं प्रचक्षते॥

इति मनुवचनात्।

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जितम्।
स्वयमीहितलब्धं तन्नाकामो दातुमर्हति॥

इति वचनाच्च। शौर्यधनं युद्धे जयादिना लब्धं। स्वामिप्रसादलब्धं च भार्याधनं भार्याप्राप्तिकाले श्वशुरादितो लब्धं पित्रादिभिः प्रसन्नतया दत्तं प्रायोज्यं यद्यस्य प्रयोजनार्हं यथा पुस्तकादि न मूर्खैर्विभजनीयं तत् पंडितानामेव किंतु यत्र तन्मात्रं धनमस्ति तत्र स्वांशयोग्य-

## अथ पितृकृतपैतामहधनविभागः ॥

तत्र मातृरजोनिवृत्तिसहकृता तदिच्छा नियामिका। ऊर्ध्वं पितुः पुत्रा ऋक्थं भजेरन्। मातुर्निवृत्ते रजसि जीवति चेच्छति इति गौतमीयात्। नच गौतमवचनं पितुः स्वोपात्तधनविषयमिति वाच्यं। पितुः स्वोपार्जितधनेमातृरजोनिवृत्यनंतरं विभागाभ्युपगमे।

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्॥

इत्यस्य निर्विषयत्वापत्तेः। रजोविवृत्तौ पुत्रोत्पत्त्यसम्भवात्। नच वैपरीत्यमिति वाच्यं तथात्वे पितामहधने विभक्तजस्य निरंशतया तस्य वृत्तिलोपापत्तेः। वृत्तिलोपस्य च। ये जाता येप्यजाता वा। इत्यादिना निषेधात्। नच पितृगृहीतपितामहद्रव्य एव पित्रनंतरं विभक्तजस्याधिकारान्न वृत्तिलोप इति वाच्यम् पित्रा सकलतद्धनस्य भुक्तत्वे वृत्तिलोपावश्यकत्वात्। एवं च मातृपदं विमातृपरं अपि पुत्रसम्भावनातुल्यत्वात् तत्र पितामहधनविभागे तु पितुरंशद्वयं पुत्राणामेकैकांशित्वम्

जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वयम्।

इति बृहस्पति वचनात्। पितृधनगोचरत्वं चास्य नाशंक्यं तत्र स्वेच्छामात्रस्य नियामकत्वात् इच्छया न्यूनाधिकग्रहणस्यापि संभवात्। भागद्वयमात्रविधानानुपपत्तेश्च पूर्वोक्तगुणवत्त्वादिसत्त्वेपि पैतामहभूमिनि-

१ पितुरिच्छा। २ मातुर्निवृत्ते रजसि पितृधनगोचरमस्तु। ऊर्ध्वं विभागाज्जातस्त्वित्यादिकं तु पितामहधनगोचरमित्यस्यार्थः।

बंधाद्विपदरूपद्रव्याणां न्यूनाधिकदानेन पितुः प्रभुत्वं भूम्यादित्रिकभिन्ने पैतामहमणिमुक्ताप्रवालादीनामुक्तकारणसत्त्वे स्वार्जितवन्न्यूनाधिकदाने पितुःप्रभुत्वम्।

भूर्या पितामहोपात्ता निबंधो द्रव्यमेव च।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः॥

इति पितुः स्वाच्छंद्यनिवृत्तिपरयाज्ञवल्क्यवचनात्। सति पितामहधनस्वामिनि पितरि तत्पुत्राणां पितामहधनस्वामित्वाप्रसक्तेर्यथाश्रुतार्थबाधात्। निबंध आकरादौ नियतलभ्यं राजादिदत्तमिति कल्पतरुः। द्रव्यं द्विपदरूपं भूसाहचर्यात्। तथा च

स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम्।
असंभूय सुतान्सर्वान् न दानं न च विक्रयः॥
मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः।
स्थावरस्य तु सर्वस्य न पिता न पितामहः॥

इति याज्ञवल्कीयाच्च। अत्र मणिमुक्ताप्रवालानामित्युपादाय पुनः सर्वस्येत्युपादानं सर्वेषां भूम्यादित्रितयभिन्नसुवर्णादिद्रव्याणां दानादिषु पितुः स्वाच्छंद्यार्थं तत्रापि सर्वस्येत्युपादानात्सर्वस्य कुटुंबवर्तनहेतोर्दानादिनिषेधः। कुटुंबवर्तनाविरोधियत्किंचित्स्थावरादेर्न दानादिनिषेध इति दायभागः। एवं यदा पिता पुत्रान् विभज्य यथाशास्त्रं भागं गृहीत्वा पुत्रैः सहासंसृष्ट एव पुत्रांतरमुत्पाद्य मृतस्तदा विभागानंतरजात एव तद्धनाधिकारी न तु पूर्वविभक्तोपीत्येवं पूर्वभ्रातृविभागेपिवि-

भक्तजस्य नांशित्वमित्याह बृहस्पतिः।

पित्रा सह विभक्ता ये सापत्न्या वा सहोदराः।
जघन्यजाश्च ये तेषां पितृभागहरास्तु ते॥
अनीशः पूर्वजः पैत्रे भ्रातृभागे विभक्तजः।
परस्परमनीशास्ते मुक्ताशौचोदकक्रियाः॥

जघन्यजा विभागानंतरजाताः। यदि तु येनकेनचित्पुत्रेण सह संसृष्टः सन् पिता मृतस्तदा तद्धनं संसृष्टविभक्तजाभ्यां पुत्राभ्यां समं विभाज्यम्

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्।
संसृष्टास्तेन वा ये स्युर्विभजेत्स हि तैः सह॥

इति मनुवचनात्। तत्रापि विशेषः। संसृष्टेनापि पित्रा स्वासाधारणधनशरीरायासाभ्यां यदर्जितं तद्विभक्तजस्यैव न तु पुत्रांतरस्यापि। तथा च बृहस्पतिः

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम्।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः॥

अत्र स्वयमित्यनेनासाधारणधनेन शरीरायासेन चार्जितं दर्शयति। एवं विभक्तपित्रा यदृणादिकं स्वार्थमेव कृतं तद्विभक्तजेनैव समाधेयम्।

यथाधने तथर्णेपि दानाधानक्रयेषु च।

इति तद्वचनशेषात्। यत्पुनः संसृष्टेन सह साधारण्येन ऋणादिकं कृतं तदुभाभ्यामेव संसृष्टविभक्तजाभ्यां समाधेयं। विभक्तजः विभागानंतरगर्भाधानेन उत्पन्नः गर्भाधानादृते जनकव्यापाराभावात् अतो यद्यविज्ञातग-

भार्यायामेव स्त्रियां पुत्रा विभक्तास्तदा तद्गर्भजातो विभक्तेभ्य एव भ्रातृभ्यः पूर्वविभक्तान्येकीकृत्य पुनर्विभज्य स्वांशं गृह्णीयात् न तु विभक्तजेन सह पितृधनाधिकारित्वं पितुः स्वार्जितविषयं। पितामहधनस्य तु मातुर्विमातुश्च रजोनिवृत्तिमंतरेण विभागाभावात् भ्रांत्या कृतस्य च तस्याशास्त्रीयत्वे नानुपादेयत्वात् तत्र विभक्तजानां सर्वेषामेवांशित्वात् अत एव यदि दैवात् पितामहभूम्यादिकं विभज्य यथाशास्त्रं स्वयमंशद्वयं गृहीत्वा पिता पृथक्स्थितस्तदा पितामहसम्बंधिधनविभागं भ्रात्रादिभ्यो विभक्तजोपि गृह्णीयात् पूर्वविभागस्य अशास्त्रीयत्वेन निवर्त्यत्वात्। यथात्रैव विषये विष्णुः। पितृविभक्ता विभागानंतरमुत्पन्नस्य भागं दद्युः। इति। एवं पित्रा पितामहपुत्राणां विभागः पुत्रपौत्रप्रपौत्रपर्यंतः समानो नात्रोत्पत्तितः प्रत्यासत्तिक्रमेणाधिकारः पुत्रादीनां त्रयाणामेव पार्वणे तत्पिंडतद्भोग्यपिंडद्वयदातृत्वात्। अत एव जीवत्पितृकयोः पौत्रप्रपौत्रयोर्नाधिकारः पार्वणानधिकारितया पिंडाप्रदातृत्वात्। पित्रोरुपरमे च भ्रातृणां विभागे पितृकृत् विशेषः परं निवर्तते। अन्यत्तु सर्वमेव पूर्ववत्प्रत्येतव्यं यत्र च एकस्य द्वौ पुत्रौ जातौ तयोरेकोस्ति अपरश्च बहून् पुत्रानुत्पाद्य मृतः किंतु पुत्राः संति तत्र पुत्रस्य एको भागः अपरश्च भागो बहूनां नप्तृणां स्वपित्रधीनजन्ममूलत्वाद्धनसंबंधस्य यावत्येव धने तस्य स्वामित्वार्हत्वं तावत्येव धने तत्पुत्रादीनामपीति जी-

मूतवाहनादयः प्राहुः ॥ इदानीं सवर्णभ्रातॄणां विभागो विंशोद्धारादिपूर्वको वा समो वेत्यभिधीयते ॥ उद्धारमंतरेणापि समविभागमाह पितरीत्यनुवृत्य हारीतः। समानतो मृते ऋक्थविभागः।तथा याज्ञवल्क्यः।

विभजेरन्सुताः पित्रोरूर्ध्वमृक्थमृणं समम् ॥

तथा बृहस्पतिः

द्विप्रकारो विभागस्तु दायादानां प्रकीर्तितः।
वयोज्येष्ठक्रमेणैकः परा समांशकल्पना ॥

इति वयोज्येष्ठक्रमेणेति विंशोद्धाराभिप्रायेण। शूद्रत्वे विंशोद्धारो नास्ति इति दायभागः।अतः सोद्धारानुद्धारयोर्विकल्पः। नच समभागस्य शास्त्रीयत्वात्तस्यैव नित्यवदनुष्ठानमिति वाच्यं भक्त्यतिशयेन भ्रातॄणामुद्धारानुमतेरपि संभवात् विभागाविभागविकल्पवत्। अत एवायतनानां भक्त्यतिशयाभावात् उद्धारार्हज्येष्ठाभावाच्च समभाग एव लोके दृश्यते। यस्तु स्वयोग्यतया पितृपितामहादिधने निस्पृहः सोपि तत्पुत्रादेः कालांतरे दुरंततावारणार्थं किंचिद्दत्त्वा विभजनीयः।

भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा।
स निर्भाज्यः स्वकादंशात् किंचिद्दत्वोपजीवनम् ॥

इतिमनुवचनात्। विभागस्तु पित्रादेर्धनेन ऋणं परिशोध्य तदवशिष्टधनस्य करणीयः। उत्तमर्णेच्छया वा विभज्य परिशोधनीयं।तथा नारदः

यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं ततः।

भ्रातृभिस्तद्विभक्तव्यमृणी न स्याद्यथा पिता ॥

अत्र ऋणी न स्याद्यथा पितेत्यनेन विभागानंतरमपि ऋणपरिशोधनं दर्शितं अन्यथा व्यर्थं स्यात्। एवं प्रतिश्रुतमपि देयमित्युक्तमसकृत्। एवमेकेन भ्रात्रादिना बहुपोष्यतया यत्राधिकं भुक्तं तत्र भुक्तांशो न विभागमध्ये प्रवेशनीयः किंतु भुक्तावशिष्टस्य विद्यमानस्यैव विभागः कार्यः।

बंधूनामविभक्तानां भागं नैव प्रदापयेत्।
दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥

इति नारदवचनात्। दृश्याद्वेति वा शब्द एवार्थे ततो विभक्ततादशायां यावद्धनं संचितं यावच्च व्ययितं तत्सर्वं बुद्धा यदेकीकृतं तद्दृश्यं विद्यमानं तस्मादेव विभागः कार्य इत्यर्थः। असंस्कृतभ्रात्रादीनां पैतृकधनेन संस्कार्यतामाह व्यासः।

येषां तु न कृताः पित्रा संस्कारविधयः क्रमात्।
कर्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात् ॥

पितरि चोपरते सोदरासोदरभ्रातृभिर्मातुरनुमत्या विभागे क्रियमाणे मात्रे स्वतुल्यभागो दातव्यः।

समांशहारिणी माता पुत्राणां स्यान्मृते पतौ।

इति वचनात्। इदं च स्त्रीधनादाने। स्त्रीधनदाने स्वर्धदानं अधिविन्नस्त्रियै प्राप्तस्त्रीधनायै आधिवेदनिकस्यार्धदानदर्शनेन सांदष्टिकन्यायात्। यथा याज्ञवल्क्य.

अधिविन्नस्त्रियै देयमाधिवेदनिकं समम्।

न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्धं प्रकीर्तितम् ॥

द्वितीयविवाहार्थिना प्रथमस्त्रियै पारितोषिकं धनं यद्दीयते तदाधिवेदनिकं अधिकविवाहार्थत्वात्तस्य तत्र द्वितीयस्त्रियै यावद्दीयते तत्समानं देयमित्यर्थः। अत्र मातृपदस्य जननीपरत्वात् न सपत्नीमातृपरत्वमपि सकृच्छ्रुतस्य मुख्यगौणत्वानुपपत्तिरिति श्रीकृष्णतर्कालंकारस्मार्त्तभट्टाचार्यजीमूतवाहनादयः प्राहुः। मैथिलास्तु मातृपदं सपत्नीमातृपरामिति बृहस्पतिवचनैकवाक्यत्वात्। यथा बृहस्पतिः।

तदभावे तु जननी तनयांशसमांशिनी।
समांशा मातरस्तेषां तुरीयांशास्तु कन्यकाः॥

अस्यार्थः तदभावे पितुरभावे पुत्रैर्विभागे क्रियमाणे जननी पुत्रतुल्यांशभागिनी। अपुत्रा विमातरश्च पुत्रतुल्यांशभागिन्य इत्याहुः। एवं पितामहीसपत्नीनामपि स्वभर्तृधर्मपुत्राभावे पौत्रतुल्यांशभागित्वम्।

पितामह्यस्तु सर्वास्ता मातृतुल्याः प्रकीर्तिताः॥

इत्यत्र बहुवचनश्रवणात्सर्वपदोपादनाच्च इति प्राहुः। मिश्राणामप्यत्रैव स्वरसः।

### अथ संसृष्टधनविभागः।

तत्र संसर्गिणो बृहस्पतिना दर्शिताः। यथा

विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः॥
पितृव्येणाथ वा प्रीत्या स तु संसृष्ट उच्यते॥

तेन पित्रादिभिः सह विभक्तानां पुनरन्योन्येच्छया

पूर्वकृतविभागमुपेक्ष्य यत्तव धनं तन्मम धनं यन्मम धनं तत्तवापीति व्यवस्थया एकगृहरूपतयाऽवस्थान-संसर्ग इति प्रतिपन्नं तत्र पितृभ्रातृपितृव्यव्यतिरिक्तानां संसर्गो न भवति। अन्यथा परिगणितानर्थक्यापत्तेरिति स्मार्तजीमूतवाहनादयः प्राहुः। मैथिलास्तु पित्रादिपद-मुपलक्षणं येषामेवोत्पत्तितोऽविभक्तत्वं तेषामेव विभा-गानंतरमेकत्रावस्थानं संसर्गः तेन पितृव्यपुत्रादिभिरपि संसर्गो भवतीत्याहुः तच्चिंत्यम्। मनुविष्णू।

विभक्ताः सह जीवंतो विभजेरन्पुनर्यदि।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते॥

अत्र सम इत्यनेन विंशोद्धाराद्यभाव एव सूचितः न त्वसवर्णभ्रातॄणामपि भागसमता। अत एव बृह-स्पतिः॥

विभक्ता भ्रातरो ये च संप्रीत्यैकत्र संस्थिताः।
पुनर्विभागकरणे तेषां ज्यैष्ठ्यं न विद्यते॥

इदं तु ज्येष्ठांशमेव निषेधयति न तु भागसाम्यमपि ज्ञापयति। बृहस्पतिः

संसृष्टानां तु यः कश्चिद्विद्याशौर्यादिना धनम्।
प्राप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः॥

यदि तु येनकेनचित्पुत्रेण सह पिता संसृष्टः सपुत्रां-तरमुत्पाद्य मृतस्तदा तद्धनं संसृष्टविभक्तजाभ्यां पुत्रा-भ्यां समं विभजनीयं

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्।

संसृष्टास्ते न वा ये स्युर्विभजेत स तैः सह ॥

इति प्रागुक्तमनुवचनात्। तत्रायं विशेषः। असंसृष्टेन पित्रा स्वासाधारणधनशरीरायासाभ्यां यदर्जितं तद्विभक्तजस्यैव न तु पुत्रांतरस्यापि। तथा च बृहस्पतिः।

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम्।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥

अत्र स्वयमित्यनेनासाधारणधनशरीरायासेनार्जनं दर्शयति सर्वशब्देन च पित्रार्जितं बहुतरमपि विभक्तजस्यैवेति सूचितं। एवं विभक्तजपित्रा यदृणादिकं स्वार्थमेव कृतं तद्विभक्तजेनैव समाधेयं।

यथा धने तथर्णेऽपि दानाधानक्रयेषु च ॥

इति प्रागुक्तवचनात्। यदि पुनः संसृष्टेन सह साधारण्येन ऋणादिकं पित्रा कृतं तदा तदुभाभ्यां संसृष्टविभक्तजाभ्यां समाधेयम् ॥

अथ विभागानंतरमागतस्य विभागः।

तत्र बृहस्पतिः।

कृतेऽकृते विभागे वा ऋक्थी यत्र प्रवर्तते।
सामान्यं च भवेयत्तु तत्र भागहरस्तु सः ॥
ऋणं लेख्यं गृहं क्षेत्रं यस्य पैतामहं भवेत्।
चिरकालप्रोषितोऽपि भागभागागतस्तु सः ॥
गोत्रसाधारणं त्यक्त्वा योऽन्यदेशं समाश्रितः।
तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः।
तृतीयः पंचमो वापि सप्तमो वापि यो भवेत् ॥

जन्मनामपरिज्ञाने लभेदंशं क्रमागतम्
यं परंपरया मौलाः सामंताः स्वामिनं विदुः।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही॥

इति साधारणधनोपलक्षणं तेनाविभक्तादशायां देशांतरगतेन चिरप्रोषितवंश्येन समंतात्प्रतिवासिभिर्मौलैरात्मज्ञापनपूर्वकं क्रमागतधनाद्यथाशास्त्रं भागग्रहणं कार्यमिति स्थितं। भोगकृतविशेषस्त्वग्रे वक्ष्यते।

अविभक्तविभक्तानां कुल्यानां वसतां सह।
भूयो दायविभागः स्यादा चतुर्थादिति स्थितिः॥

इति वचनं तु सहवासविषयम्॥ एकमातृकयोर्विभिन्नपितृकयोर्विभागमाह विष्णुः।

एका माता द्वयोर्यत्र पितरौ द्वौ च कुत्रचित्।
तयोर्यद्यस्य पैत्र्यं स्यात्स तद्गृह्णीत नेतरः।
द्वौ सुतौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने।
तयोर्यद्यस्य पैत्रं स्यात्स तद्गृह्णीत नेतरः॥

यस्य बीजाद्यो जातस्तद्धनं स गृह्णीयात् नेतरो नान्यबीजतोजातस्तद्धनं गृह्णीयादित्यर्थः। तेन नात्र समांशव्यवस्था। तथाविधपुत्राभ्यां मातृधनविभागेपि यस्य पित्रा यद्धनं तस्यै दत्तं तेन तद्ग्राह्यं नेतरेणेत्यर्थः मात्रा स्वयमार्जिते तु तुल्यांशित्वमेवानयोः॥ तथाविभक्तधनस्य देयादेयत्वविचारः। अविभक्तस्थावरेषु सर्वेषां दायादानामनुमतिं विना एकस्य दानाद्यनधिकारः

स्थावरस्य समस्तस्य गोत्रसाधारणस्य च।

नैकः कुर्यात् क्रयं दानं परस्परमतं विना ।
अविभक्ता विभक्ता वा सपिंडाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ॥

इति व्यासवचनात् । वस्तुतस्तु यथेष्टविनियोगार्हत्वलक्षणस्य स्वत्वस्य द्रव्यांतरवदत्राप्यविशेषाद्दानादिकं कृतं सिध्यत्येव वचनं तु स्वामित्वेन दुर्वृत्तपुरुषगोचरविक्रयादौ कुटुंबविरोधादधर्मभागिताज्ञापनार्थं निषेधरूपं न तु विक्रयाद्यनिष्पत्त्यर्थमिति स्मार्तदायभागकारादयः प्राहुः । अत एव

यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः ।
पृथक्कर्मगुणोपेता न चेत्कार्येषु संमताः ॥
स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वै ॥

इति नारदवचने एकेन क्रियमाणे कार्ये पुनरन्येषामसंमतत्वेपि स्वभागदानादावीशत्वमुक्तं । विभक्तविषयमेतदिति नाशंक्यम्

दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः ।
विभक्तानां पृथग्ज्ञेयाः पाकधर्मागमव्ययाः ॥

इति नारदवचनेन तत्रान्येषामस्वामित्वेन संमतेरसंमतेर्वा वाच्यत्वात् । इत्थं च वक्ष्यमाणमनुवचने यत्सामान्यस्यादेयमध्ये गणनं तन्निषेधपरमेव न तु दानाद्यनिष्पत्तिपरं एवमेव स्मृतिसारादयः । अत्रापवादमाह प्रामाणिकवचनम् ।

एकोपि स्थावरे कुर्याद्दानाधमनविक्रयम्।
आपत्काले कुटुंबार्थे धर्मार्थे च विशेषतः॥

इति। तस्माद्विभक्तस्याविभक्तस्य वा स्वांशदानं सिध्यत्येवेति स्थितं तत्र दानादिकं न सिध्यतीति मिश्रास्तच्चिन्त्यम्।

## अथ दत्तकौरसयोर्विभागव्यवस्था॥

औरसेन दत्तकानां विभागे औरसस्य त्र्यंशित्वं असवर्णदत्तकादेस्तु नांशित्वं किं तु ग्रासाच्छादनादिमात्रभागित्वं। तदाह देवलः।

सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः।
औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते॥
तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः।
हीनास्तमुपजीवेयुर्ग्रासाच्छादनसंभृताः॥

दायहराः पितुः सर्वदायहराः। तेषामिति तेषां मध्ये ये सवर्णाः पुत्रा इत्यर्थः। औरसे सति तृतीयांशहरा हीना ये पितुरौरसपुत्राश्च भ्रातुर्हीनवर्णास्ते ग्रासाच्छादनमात्राधिकारिणः तदाह कात्यायनः।

उत्पन्नेत्वौरसे पुत्रे तृतीयांशहराः स्मृताः।
सवर्णा असवर्णास्तु ग्रासाच्छादनभागिनः॥

अत्रासवर्णपदं हीनवर्णपरं देवलवचनैकवाक्यत्वात्॥

## अथनिह्नुतस्यपश्चादवगतस्य विभागः।

तत्र मनुः

ऋणे धने च सर्वस्मिन्प्रविभक्ते यथाविधि।

पश्चाद्दृश्येत यत् किंचित्तत्सर्वं समतां नयेत् ॥

इति पूर्वं यस्य यथा भागकल्पना कृता तत्समानैवापहर्त्रा सहापहृतस्य द्रव्यस्य तथा सा कार्या न पुनरस्यापहर्तृतया अल्पभागो दातव्यो न दातव्य एव वा। न पुनरपहृतद्रव्ये सर्वेषां समभाग एवेति समतां नयेदित्यस्यार्थः। विंशोद्धारादिबाधेः प्रमाणाभावात् असवर्णपुत्रादीनां विभागसाम्यापत्तेश्च अत्र पश्चाद्दृश्येतेत्यनेन विभक्ते सति लौकिकप्रमाणमात्रेण लब्धस्यैव विभागो नहि तत्र दिव्यादिकं अन्यथा शंकापिशाच्या दिव्यं विना क्वचिदप्यनिश्चितद्रव्यत्वेन सम्यग्विभागो न स्यात्। कात्यायनः।

दृश्यमानं विभज्येत गृहं क्षेत्रं चतुष्पदम्।
गूढद्रव्याभिशंकायां प्रत्ययस्तत्र कीर्तितः॥

प्रत्ययो दिव्यं। एतदेव स्पष्टयति।

गृहोपस्करवाह्यानां दोह्याभरणकर्मिणाम्।
दृश्यमानं विभज्येत कोषं गूढेऽब्रवीन्मनुः॥

कोषो दिव्यविशेषः। कात्यायनः।

प्रच्छादितं तु यदेन पुनरागत्य तत्समम्।
भजेरन्भ्रातृभिः सार्द्धमभावे तु पितुः सुताः॥

भृगुः।

अन्योन्यापहृतं द्रव्यं दुर्विभक्तं च यद्भवेत्।
पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः॥

पश्चात्प्राप्तमित्यनेनापहृतद्रव्यस्यैव विभागो न तु पू-

र्विभक्तस्यापि पुनर्विभाग इति दर्शितम्। दुर्विभक्तमित्यनेन भ्रमादिना कृताशास्त्रीयविभागस्य पुनः शास्त्रीयविभागः कार्य इत्युक्तम्।

सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीनि त्रीण्येतानि सकृत्सकृत् ॥

इति तु शास्त्रीयविभागानंतरं न पुनरस्तद्विभाग इत्येतत्परं। देशादिभेदेनापि विभागमाह कल्पतरुरत्नाकरयोः कात्यायनः

देशस्य जातेः संघस्य धर्मो ग्रामस्य यो भृगुः।
उदितः स्यात्स तेनैव दायभागं प्रकल्पयेत् ॥

भृगुः आहेति शेषः। तथा कात्यायनः।

बंधुनापहृतं द्रव्यं बलान्नैव प्रदापयेत् ।
बंधूनामविभक्तानां भोगं नैव प्रदापयेत्॥

अत्रापहृतपदं भाक्तं। एवमेव विश्वरूपहलायुधस्मार्तजीमूतवाहनादयः। सामादिना दाप्यो न तु बलात् अपहारे तु आस्तां सामादिना दापनं तस्य घातनमपि कार्यं। अविभक्तेन यदधिकं भुक्तं तदसौ न दाप्यः। एतच्च मुनिभिरपहर्तुरपि विभागप्रतिपादनादवसीयते।

अथ वृत्तविभागसंदेहे निर्णयः

तत्र नारदः।

विभागधर्मसंदेहे दायादानां विनिर्णयः।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्तनात् ॥

इति। ज्ञातीनां कीर्तनं तेषु सत्सु नान्यसाक्षिग्रहण-

मित्येतदर्थे। अत एव याज्ञवल्क्यः।

विभागनिह्नवे ज्ञातिबंधुसाक्ष्यभिलेखितैः।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतुकैः॥

इति। प्रथम ज्ञातयः सपिंडाः साक्षिणः। तदभावे बंधुपदोपनीताः संबंधिनः साक्षिणः। अत एव शंखः।

गोत्रभागविभागार्थे संदेहे समुपस्थिते।
गोत्रजैश्चापरिज्ञाने कुलं साक्षित्वमर्हति॥

इति। कुलंबंधुः। तदभावे लेखितेनापि निर्णयः कार्यः। लेखितस्य साक्षिभ्यो गुरुत्वं। तदभावे प्रथकार्यप्रवर्त्तनादपि निर्णयः। यथा नारदः।

दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः।
विभक्तानां पृथग्ज्ञेयाः पाकधर्मागमव्ययाः॥
साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम्॥
येषामेताः क्रिया लोके प्रवर्तंते स्वऋक्थतः।
विभक्तानवगच्छेयुर्लेख्यमप्यंतरेण तान्॥

एको ददाति अपरश्च गृह्णाति एकेन ऋणादिषु क्रियमाणेषु अपरभ्राता साक्षी क्रियते प्रतिभूर्वा एवमादीनामेकैकेनापि निर्णयः कार्य इति दिक्॥

अथ भुक्तिः॥

तत्र याज्ञवल्क्यः॥

पश्यतोऽब्रुवतो हानिर्भूमेर्विंशतिवार्षिकी।
परेण भुज्यमानाया धनस्य दशवार्षिकी॥

विवादमकुर्वाणस्य स्वामिनः समक्षं परेणासपिंडादिना भुज्यमानाया भूमेर्विंशतिवर्षनिवृत्तौ स्वत्वहानिः। अत्र वर्षगणना सावनेन लोकव्यवहारकर्मत्वात्तस्य। तथा विष्णुधर्मोत्तरम्।

सत्राण्युपास्यान्यथ सावनेना-
लोक्यं च यत्स्याद्व्यवहारकर्म ॥

इति। तथा व्यासः

वर्षाणि विंशतिं यस्य भूमिर्भुक्ता परैरिह।
सति राज्ञि समर्थस्य तस्य सेह न सिध्यति ॥

समर्थस्य बालत्वादिदोषरहितस्य धनस्य दशवर्षनिवृत्या स्वत्वहानिः। तथा च मनुनारदौ

यत्किंचिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी।
भुज्यमानं परैस्तूर्णीं न स तल्लब्धुमर्हति ॥

यत्किंचिद्धनजातं समक्षमेव प्रीत्यादिव्यतिरेकेण परैर्दशवर्षाणि भुज्यमानं स्वयं तूर्ष्णीं प्रेक्षते न भुज्यतामिति प्रतिषेधं न कुरुते नासौ तल्लब्धुं योग्यो भवति तत्र तस्य स्वाम्यं नश्यतीत्यर्थः। तथा गौतमः। अजडपौगंडधनं दशवर्षं भुक्तं परैः संनिधौ भोक्तुरिति। जडो विकलेंद्रियः। पौगंडः अनुत्पन्नश्मश्रुरित्यर्थः।

तथा च नारदः।

बाल आ षोडशाद्वर्षात्पौगंडश्चापि शब्यते।

तस्माद्दशवर्षविंशतिवर्षभोग एव स्वत्वं जनयति यथाकालवशात् बीजमंकुरं जनयति तरवश्च प्रसूनमिति

स्वामिनाऽपरित्यक्तेपि शास्त्रोक्तकालभोगात्स्वाम्यमन्यस्य भवति। यथा जयेन राज्ञः परराष्ट्रधने इति। एवमेव स्मार्तश्रीकरबालोकयोगलोकभवदेवभट्टशूलपाणिकुल्लकभट्टचंडेश्वरवर्द्धमानोपाध्यायप्रभृतयः। व्यवहारोपि तादृगेव। अत्रोपेक्षया स्वत्वहानिं भुक्त्या च स्वत्वमाह नारदः

भुज्यमानान्परैरर्थान् यस्तान्मोहादुपेक्षते।
समक्षं तिष्ठतोप्यस्य तान्भुक्तिः कुरुते वशे।

व्यक्तमाह बृहस्पतिः

स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया।

इति। उपेक्षया क्षमया। अत्र स्वामिनः सुशीलत्वं अक्षमत्वं महेच्छत्वं च हेतुः। ततश्च विंशतिवर्षात् पूर्वं स्वकृतिसाध्यकर्षणादिना यत् तस्य स्वयमुत्पादितं तत्रैव स्वत्वं तदुत्तरं तु भूमौ एवं दशवर्षात् पूर्वं गवादौ स्वकृतिसाध्यदोहनपालनाद्यैर्यत् दुग्धादिकमुत्पन्नं तत्रैव स्वत्वं। दशवर्षोत्तरं तु न गवादिधने स्वत्वमिति पूर्वं तन्नाशकभोगे तु चौर्यदोषो भवति यत्राध्यादीन् व्यावर्तयति। पश्यतोऽब्रुवतो हानिरित्यभिधाय याज्ञवल्क्यः।

आधिसीमोपनिक्षेपजडबालधनैर्विना।
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि॥

आधिः बंधनद्रव्यं। उपनिक्षेपः

वासनस्थमनाख्याय समुद्रं यद्विधीयते।

इति नारदोक्तः। वासनं निक्षेपाधारभूतं संपुटकादि तत्स्थं समुद्रं ग्रंथ्यादियुक्तं। जडो बुद्धिविकलः। बालोऽ-

प्राप्तषोडशवर्षवयस्कः। उपनिधिः प्रीत्या भोगार्थमर्पितः। ततश्चाध्यादिभिर्जडादिधनैश्च विनान्यानि धनानि तत्तदुपभोगकालेन स्वामिनो नश्यंति भोक्तुर्भवंति। एतानि तु स्वामिनो न नश्यंति न वा भोक्तुर्भवंति । स्मृतिः ।

द्वारमार्गक्रियायोगो जलवाहादिषु क्रियाः ।
भुक्तिरेव तु गुर्वी स्यान्न दिव्यं न च साक्षिणः ॥
क्रियायोगो गमनादिरूपः । याज्ञवल्क्यः ।
आगमो ह्यधिको भोगान् विना पूर्वक्रमागतात् ।
आगमो बलवान्नैव भुक्तिः स्तोकापि यत्र न ॥
आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥
योऽभियुक्तः परेतः स्यात् तस्य ऋक्थी तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विना कृता ॥

भूम्यादावागमः पूर्वपुरुषक्रमानुध्यातभोगात् बलवान्। अतः क्रमागतभोग आगमाद्बलवान् । तथाच बृहस्पतिः

अनुमानाद्वरः साक्षी साक्षिभ्यो लिखितं गुरु।
अव्याहता त्रिपुरुषी भुक्तिरेभ्यो गरीयसी ॥
त्रिपुरुषभोगमाह व्यासः
प्रपितामहेन यद्भुक्तं तत्पुत्रेण विना च तम् ।
तौ विना यस्य पित्रा च तस्य भोगस्त्रिपूरुषः ॥
पिता पितामहो यस्य जीवेच्च प्रपितामहः ॥
त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपूरुषः ॥

आगमोऽपि बलवान्न भवति यत्र भुक्तिः स्वल्पापि नास्ति। तथाच नारदः

विद्यमानेऽपि लिखिते जीवत्स्वपि च साक्षिषु।
विशेषतः स्थावराणां यन्न भुक्तं न तत्स्थिरम्॥

इति दीपकलिका। यत्र वादिनौ स्वस्वागमबलप्रवृत्तौ आगमयोस्तु पौर्वापर्यं न निर्णीयते तत्र यस्य भुक्तिरस्ति तस्यागमो बलीयान् वा स्वन्धस्येत्यर्थः इति मिताक्षरा। तस्मात् यत्रागमपौर्वापर्यनिश्चयस्तत्र

सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया।
आदौ प्रतिग्रहे क्रीते पूर्वा च बलवत्तरा॥

इति याज्ञवल्क्यवचनात् निर्णयः। आध्यादीनां व्यवस्था त्वनुपदं वक्ष्यते। आधिविक्रयदानानामंतरालसौक्ष्म्येण पौर्वापर्यस्य निर्णेतुमशक्तौ व्यवस्थामाह बृहस्पतिः

कृतं चेदेकदिवसे विक्रयाधिप्रतिग्रहम्।
त्रयाणामपि संदेहे कथं तत्र विचारणा॥
त्रीण्येव हि प्रमाणानि विभजेरन् यथांशतः।
उभौ चार्थानुरूपेण विभागेन प्रतिग्रहः॥

आधिधर्तृकेतृसंप्रदानैस्तद्वस्तु समांशेन विभज्य ग्राह्यमित्यर्थ इति मिश्राः प्राहुः।हलायुधस्तु आधिधर्तुरत्रांशो लघीयान्हीनबलत्वादित्याह। आगमस्त्विति आगम्यते प्राप्यते स्वीयो भवति येन क्रियादिना स आगम इति व्यवहारमातृकाः।आगमःसाक्षिपत्रादिकमिति या-

ज्ञवल्क्यदीपकलिका। मैथिलास्तु आगमो धनार्जनोपायः क्रयादिरित्याहुः। व्यासः

वर्षाणि विंशतिं भुक्ता स्वामिना व्याहृता सती।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा च द्विपौरुषी॥
त्रिपौरुषी च त्रिगुणा न तत्रान्वेष्य आगमः।

इति वचनमसमक्षभोगविषयं। समक्षभोगे तु विंशतिवर्षभोगात्स्वत्वमित्यविरुद्धं एतादृशस्मृत्युक्तकालविषय एव कात्यायनः

स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते।
अस्मार्ते त्वागमाभावात् क्रमात् त्रिपुरुषागता॥

अत एव नारदः

अन्यायेन च यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः।
न तच्छक्यमपाकर्तुं क्रमात् त्रिपुरुषागतम्॥

अन्यायेनेति आगमादिकं विना पित्रा पूर्वतरैः पितरमादाय पूर्वतरैरित्यर्थः। यत्तु

अनागमं तु यो भुंक्ते बहून्यब्दशतानि च।
चौरदंडेन तं पापं दंडयेदवनीपतिः॥

इति दंडविधायकवचनं तत् धर्मशास्त्रविरोधात्त्रिपुरुषभोगेतरपरं। वस्तुतस्तु अनागममिति दंडविधायकवचनं स्त्रीधननरेंद्रधनविषयम्

स्त्रीधनं तु नरेंद्राणां न कदाचन जीर्यति।
अनागमं भुज्यमानमपि वर्षशतैरपि॥

इति स्वत्वनिषेधकनारदवचनैकवाक्यत्वात्॥

## अथ भुक्तिस्वत्वापवादः ॥

तत्र बृहस्पतिः।

भुक्तिस्त्रिपुरुषी सिध्येदपरेषां न संशयः।
अनिवृत्ते सपिंडत्वे सकुल्यानां न सिध्यति ॥
अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम्।
सुहृद्बंधुसकुल्यानां न तद्भोगेन हीयते ॥
विवाह्य श्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च।
सुदीर्घेणापि कालेन तेषां सिध्यति तन्नु न ॥

आपणो विक्रयस्थानं। विवाह्यो जामाता ॥

इति विद्वद्विरचिते विवादार्णवसेतुके।
तरंगो दायभागाद्यैश्चतुर्थः पूर्तिमागतः ॥ ४ ॥ ५ ॥

## अथ व्यवहारदर्शनम् ॥

तत्र याज्ञवल्क्यः।

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।
आवेदयति चेद्राज्ञि व्यवहारपदं हि तत् ॥

स्मृत्याचारबहिर्भूतेन वर्त्मना परैरर्थतः शरीरतो वा पीडितो यद्राजनि निवेदयेत्तद्व्यवहारस्थानं। आवेदयति इत्यनेन राज्ञा स्वयं विवादोत्थापनं न कर्तव्यं। राज्ञीति व्यवहारदर्शकपरं। तथाच बृहस्पतिः।

राजा कार्याणि संपश्येत् प्राड्विवाकोऽथ वा द्विजः।

प्राड्विवाकमाह स एव

विवादे पृच्छति प्रश्नं प्रतिपन्नं तथैव च।
प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः॥

कात्यायनः ।

व्यवहाराश्रितं प्रश्नं पृच्छति प्राडिति स्थितिः ।
विवेचयति यस्तस्मिन्प्राड्विवाक इति स्मृतः ॥

इति । अर्थिनं प्रतिभाषते कीदृशी प्रत्यर्थिनं प्रति तव वाक् कीदृगुत्तरं इति पृच्छतीति प्राड् । श्रुत्वा च युक्तायुक्तत्वेन जयपराजयौ विविनक्ति वा इति विवाकः । प्राट् चा सौ विवाकश्चेति प्राड्विवाकः । कात्यायनः

सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
स्वयं स राजा तनुयात् तेषां जयपराजयौ ॥
यदा कार्यवशाद्राजा न पश्येत्कार्यनिर्णयम् ।
तदा नियुंज्यात् विद्वांसं ब्राह्मणं वेदपारगम ॥

मनुः

जातिमात्रोपजीवी वा कायस्थो ब्राह्मणब्रुवः ।
धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथंचन ॥

ब्राह्मणजातिमात्रं यस्य विद्यते न तु ब्राह्मणवदनुष्ठानं वणिगादिवत्साक्ष्यादिद्वारेण स्फुटन्यायनिरूपणे जातिरपि वा यस्य स परमुक्तयोग्यब्राह्मणाभावे क्वचित् कार्यदर्शने नृपतेर्भवति न तु धार्मिकोपि व्यवहारज्ञोपि शूद्रः । ब्राह्मणो धर्मप्रवक्ता इति विधानादेव शूद्रनिवृत्तिसिद्धौ न तु शूद्र इति शूद्रनिषेधो योग्यब्राह्मणाभावे क्षत्रियवैश्ययोरनुज्ञानार्थः । अत एव कात्यायनः ।

यदि विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥

द्विजान् विहाय यः पश्येत् कार्याणि वृषलैः सह ।
तस्य प्रस्खलते राष्ट्रं बलं कोषश्च नश्यति ॥
यः शूद्रो वैदिकं कर्म स्मार्तं वा भाषते यदि ।
तस्य दंडं द्वे सहस्रे सृक्किनीं चैव भेदयेत् ॥
अज्ञानतिमिरोपेतान् संदेहपटलान्वितान् ।
निरामयान् यः कुरुते शास्त्रांजनशलाकया ॥
इह कीर्तिं राजपूजां लभते सद्गतिं च सः ।
तस्मात्संशयमूढानां कर्तव्यश्च विनिर्णयः ॥

अत एव नारदः ।

अनियुक्तो नियुक्तो वा शास्त्रज्ञो वक्तुमर्हति ।
दैवीं वाचं स वदति यः शास्त्रमुपजीवति ॥

दैवीं देवतानुमतां । पुनः कात्यायनः ।

सभ्येनावश्यवक्तव्यं धर्मार्थसहितं वचः ॥
शृणोति यदि नो राजा स्यादसभ्यस्तदा नृणाम् ।

सभ्यः सभायां साधुः तथाविधमाह याज्ञवल्क्यः ॥

श्रुताध्ययनसंपन्नाः कुलीनाः सत्यवादिनः ।
राज्ञा सभासदः कार्याः शत्रौ मित्रे च ये समाः ॥

श्रुताध्ययनसंपन्नाः शास्त्रज्ञाः कुलीनाः संकरदोषरहितमातापितृपरम्परया सभायां सीदंति उपविशंति ये ते सभासदः । मनुः

त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा ॥

त्रैविद्यः त्रिवेदपारगः हेतुकः सयुक्तिव्यवहारीत्यर्थः ।

कात्यायनः

दिवसस्याष्टमं भागं भुक्त्वा भागत्रयं च यत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः ॥

अष्टममाद्यार्धं प्रहरं त्यक्त्वा भागत्रयं प्रहरद्वयपर्यंतं।मनुः

धर्मासनमधिष्ठाय संवीतांगः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत् ॥

मनुनारदहारीतबौधायनाः

पादो धर्मस्य कर्तारं पादः साक्षिणमृच्छति ।
पादः सभासदः सर्वान् पादो राजानमृच्छति ॥
राजा भवत्यनेनास्तु मुच्यंते च सभासदः ।
एनो गच्छति कर्तारं निंदार्हो यत्र निंद्यते ॥

दुर्व्यवहारदर्शनाधर्मसंबंधी चतुर्थो भागोर्थिनं प्रत्यर्थिनं वा गच्छति । अपरश्चतुर्थभागः साक्षिणमसत्यवादिनं । अन्यपादः सभासदः सर्वान् अधर्मप्रवृत्त्यनिवारकान् व्याप्नोति।पादश्च राजानं व्रजति।यस्यां पुनः सभायां असत्यवादित्वात् निंदार्होऽर्थी प्रत्यर्थी वा सम्यङ्न्यायदर्शनेन निंद्यते तत्र राजा निष्पापो भवति सभासदः न पापेन संबध्यंते । अन्यायवादिनमेव कर्तारं पापमुपैतीति कुल्लूकभट्टः । कर्तारं वादिनं प्रतिवादिनं वा राजपदविवेचकपरं अनेना निष्पापः । अर्थित्वमाहतुर्व्यासनारदौ ।

यस्य चाप्यधिका पीडा कार्यं चाप्यधिकं भवेत् ।
तस्यार्थिभावो दातव्यो न यः पूर्वं निवेदयेत् ॥

अत्र च 'पूर्वपक्षो भवेत् तस्ये'ति कात्यायनीयतृतीयचरणे पाठः। 'न यः पूर्वं निवेदयेदि'ति तस्योत्तरः पक्ष इति शेषः। स यः पूर्वं निवेदयेदितिपाठे यः प्रथमं निवेदयेत्स पूर्ववादीत्यर्थः। सभापतेः कर्तव्यमाह याज्ञवल्क्यः।

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये।
प्रतिभुवस्त्वभावेन संज्ञासंज्ञपनं तयोः॥

संज्ञासंज्ञपनं दंडतुल्याधीकरणं। निर्णयस्य कार्ये धनादिदाने। आहिताग्न्यादित्वात् कार्यशब्दस्य पूर्वनिपातः

अथ चेत्प्रतिभूर्नास्ति वादयोग्यश्च वादिनोः।
स रक्षितो दिनस्यांते दद्याद्भृत्याय वेतनम्॥

प्रतिभवति तत्कार्ये तद्वद्भवतीति प्रतिभूर्लग्नकः। वादयोग्यः विवादफलस्य साधितधनादिदानस्य दंडदानस्य च क्षमः। स्वयं विवादाशक्तौ प्रतिनिधिमाह नारदः

अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोपि वा।
यो यस्यार्थे विवदते तयोर्जयपराजयौ॥

तयोर्वादिप्रतिवादिनोः बृहस्पतिरपि।

ऋत्विग्वादे नियुक्तश्च समौ संपरिकीर्तितौ।
यज्ञे स्वाम्याप्नुयात्पुण्यं हानिं वादेथ वा जयम्॥

मनुष्यमारणादिषु प्रतिनिधिर्न दातव्य इत्याह कात्यायनः

मनुष्यमारणे स्तेये परदाराभिमर्शने।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे॥

पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दातव्यः कर्ता च विवदेत्स्वयम् ॥

कुलस्त्रीप्रभृतीनां प्रतिनिधिमाह व्यासः

कुलस्त्रीबालकोन्मत्तजडार्तानां च बांधवाः ।
पूर्वपक्षोत्तरे ब्रूयुर्नियुक्तो भृतकस्तथा ॥

भ्रात्राद्यन्यस्य पक्षाश्रितस्य दंडनीयतामाह । नारदः

यो न भ्राता पिता वापि न पुत्रो न नियोजितः ।
परार्थवादी दंड्यः स्याद्व्यवहारेषु विब्रुवन् ॥

विरुद्धं ब्रुवन् सन्नित्यर्थः । कदा के राज्ञा न धारणीया इत्याह नारदः

निर्वेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथान्येन राजकर्मोद्यतस्तथा ॥
गवां प्रचारे गोपालाः सस्यबन्धे कृषीवलाः ।
शिल्पिनश्चापि तत्काले आयुधीयाश्च विग्रहे ॥
अप्राप्तव्यवहारश्च दूतो दानोन्मुखी व्रती ।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः ॥

निर्वेष्टुकामो विवाहप्रवृत्तः । अन्येन वाद्यंतरेण । अप्राप्तव्यवहारः पंचदशवर्षानधिकवयस्कः । तत्काले विवाहादितत्क्रियासमाप्तिपर्यंतकाले । एते । विषमस्थाश्च उपप्लुतदेशस्थाः उत्तमर्णादिना नासेध्या न विधारणीयाः । एतान्प्रागुक्तान् वादिना निवेदितानिति शेषः । याज्ञवल्क्यः ।

अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।

अभियुक्तः सन्नुत्तरमदत्वा भाषावादिनं स्वाभियोगानुपमर्दकेन विवादांतरेण न योजयेत् युगपदनेकव्यवहारासम्भवात्। अत्रैव दंडमाह नारदः

पूर्ववादं परित्यज्य योन्यमालंबते पुनः।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः॥

हीनवादीत्युक्त्या दंड्यता सूचिता न प्रकृतार्थाद्धीनताऽन्यथा छलापतेः। अत्र प्रतिप्रसवमाह नारदः

कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च॥

कलहे वाक्पारुष्ये साहसे शस्त्रादिप्रहारे अनयोः पूर्वमहमप्यनेनाकुष्टः शस्त्रेण हत इत्यत्रापराधाभावाय प्रत्यभियोगं कुर्यात्। तथा च बृहस्पतिः।

आकुष्टस्तु यदाक्रोशंस्ताडितः प्रतिताडयन्।
हत्वाऽऽततायिनं चैव नापराधी भवेन्नरः॥

आततायिनमाह प्रायश्चितविवेके वसिष्ठः।

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारापहारी च पडेते आततायिनः॥

बृहस्पतिः।

नाततायिवधे हंता किल्बिषं प्राप्नुयात्क्वचित्।
विनाशार्थिनमायांतं घातयन्नापराध्नुयात्॥

अत्र किल्बिषाभावः प्रायश्चित्तनिषेधार्थः। अपराधाभावो दंडनिषेधार्थः। 'यतः सर्वत आत्मानं गोपायेते'ति श्रुतिमूलमिदं अतः पलायनादिनाऽऽत्मरक्षणाभावे इदं बोध्यमिति प्रायश्चित्तविवेकः। कात्यायनः।

आततायिनमायांतमपि वेदांतपारगम्।
जिघांसंतं जिघांसीयान्न तेन ब्रह्महा भवेत्॥
उद्यम्य शस्त्रमायांतं भ्रूणमप्यनततायिनम्।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्॥

भ्रूणो ब्राह्मणविशेषः दोषदर्शनं नियमार्थम्। मनुविष्णू॥

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायांतं हन्यादेवाविचारयन्॥

एवकारो नियमार्थः। तथा

नाततायिवधे दोषो हंतुर्भवति कश्चन।
प्रकाशं वाऽप्रकाशं वा मन्युस्तन्मन्युमृच्छति॥

तस्माद्धंतुर्मन्युर्हन्यमानमन्युं नाशयति न पुनः पुरुषो हंति हन्यते वेति हननविधेरपवादः। ननु आततायिनोरपि गोब्राह्मणयोर्हनने दोषः। आततायिवधे न दोषोऽन्यत्र गोब्राह्मणात्। इत्यादिसुमंतुवचनादिति प्रायश्चित्तविवेकोक्तं युक्तमिति चेन्न। भवदेवभट्टचरणैरप्रमाणीकृतत्वात्। यथा यच्च आततायिवधे न इत्येकं सूत्रं दोषोऽन्यत्र इत्यपरं गोब्राह्मणात्स्नातः प्रायश्चित्तं कुर्यात् इति तृतीयं। तत्र ब्राह्मणवधप्रायश्चितमुक्त्वा यस्तैः संबंधं कुर्यात्तस्याप्येवमेव प्रायश्चित्तमित्यभिधाय सुमंतुनोक्तमिदं तेन आततायिवधे न इत्येतत्सूत्रं पूर्वोक्तप्रायश्चितनिषेधकम्। दोषोऽन्यत्र इति तु आततायिव्यतिरिक्तवधे दोष उक्तः। गोब्राह्मणात्स्नातः प्रायश्चितं कुर्यात् इति प्रायश्चितांगस्नानप्रतिपादकं। गोहेतुकं स्नानं व्यासे-

नोक्तं। तथा च व्यासः

श्रूयंते यानि तीर्थानि त्रिषु लोकेषु नित्यशः।
अभिषेक समस्तेषां गवां शृंगोदकस्य च॥

ब्राह्मणशब्देनात्र विधिवाक्यमित्यभिप्रेतम। तद्धेतुकं च स्नानं यथाविहिताघमर्षणादिपूर्वकस्नानं। तेन गोहेतुकं स्नातः ब्राह्मणहेतुकं वा स्नातः प्रायश्चित्ताधिकारी भवति न स्वाप्लवनमात्रेणेति वाक्यार्थः।यत्तु भविष्यपुराणे

हत्वा तु प्रहरंतं वै ब्राह्मणं वेदपारगम्।
कामतोऽपि चरेद्वीरो द्वादशाब्दाख्यमुत्तमम्॥

तन्नाततायिवधविषयं प्रहारशब्दस्य वधानभिधायकत्वात् तेनायमर्थो भवति यश्चक्षुराद्यवयवानां प्रकर्षेण प्रहरणे प्रवृत्तः तद्वधेऽकामतोऽपि द्वादशवार्षिकमेव प्रायश्चित्तं। यदपि

पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः।

इति भगवद्गीतावचनं तदपि पलायनादिना आत्मरक्षणासामर्थ्येपि भीष्मादिवधे पापभोगिताबोधकं एवं च प्रागुक्तकात्यायनवचनं सहजत एवं संगच्छते इति सुधीभिर्विभाव्यं॥ पूर्वापेक्षया परस्याधिकवाक्पारुष्याद्यावल्पदंडमाह नारदः

पूर्वमाक्षारयेयस्तु नियतं स्यान्न दोषभाक्।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः॥

विनयो दंडः। युगपत्संप्रवर्तने समदंडमाह स एव

पारुष्ये साहसे वापि युगपत्संप्रवृत्तयोः।

विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोः ॥

एवं च दंड्योऽयमनपराधे मयि कृतपीडत्वात् इति भाषायां प्रत्यभियोगः कार्य एव प्रत्यवस्कन्दनोत्तरत्वेन युगपदनेकव्यवहारापत्तिदोषस्याभावात् ॥ याज्ञवल्क्यः ।

साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ।
विवादयेत्सद्य एव कालोन्यत्रेच्छया स्मृतः ॥

साहसं मनुष्यमारणं । गौरत्र दोह्या । अभिशापो महापातकादिना । अत्यये द्रव्यनाशे स्त्रियां कुलस्त्रियां चारित्रविवादे दास्यां वा स्वत्वविवादे एषु सद्य एव उत्तरं दापयेत् । इति दीपकलिका । विशेषमाह कात्यायनः ।

यस्मात्कार्यसामारंभाश्चिरात्तेन विनिश्चितः ।
तस्मान्न लभते कालमभियुक्तस्तु कालभाक् ॥

अत्रापवादमाह वृहस्पतिः

अभियुक्तोऽप्रगल्भत्वाद्वक्तुं नोत्सहते यदि ।
तदा कालः प्रदातव्यः कार्य्यशक्त्यनुरूपतः ॥

अत्रापि विशेषमाह व्यासः ।

राजदेवकृतो दोषस्तस्मिन्काले यदा भवेत् ।
अवधित्यागमात्रेण न भवेत्स पराजितः ।

तस्मिन्कालेऽवधिकालाभ्यंतरे सकलसमयबंधोऽभियुक्तः । अवध्यतिक्रमे हेतौ राजदैविकदोषस्य प्रमितौ न तदतिक्रामकोपराध्यति । जैह्म्याच्च तदतिक्रामको दंड्यो भंगी च भवतीत्याह स्मार्तधृतम् ।

राजदैवकृतं दोषं साक्षिभिः प्रतिपादयेत् ।

जैह्म्येन वर्तमानस्तु दण्ड्यो दाप्यश्च तद्धनम् ॥

जिह्मः छद्मकौटिल्यादियुक्तः । तथा च हारीतः छद्ममायाव्याजयुक्ता निकृतिः कौटिल्यशाठ्यवैषम्यायसद्भावयुक्तं जैह्म्यं । युक्तं योगः ॥

अथ भाषावादः ॥

तत्राहतुः कात्यायनबृहस्पती ।

प्रतिज्ञादोषनिर्मुक्तं साध्यं यत्कारणान्वितम् ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥
स्वल्पाक्षरः प्रभूतार्थो निःसंदिग्धो निराकुलः ।
विरोधिकारणैर्मुक्तो विरोधिप्रतिषेधकः ॥
यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना ।
दद्यात्तत्पक्षसंबद्धं प्रतिवादी तदोत्तरम् ।

अस्यार्थः प्रतिज्ञा साध्याभिधायिका वाक् तस्या दोषैः परस्परविरुद्धार्थपदादिभिस्त्यक्तं साध्यं साधनार्हाभिमतार्थं पक्षं विदुः । अन्यथा प्रतिज्ञादोषेण साध्यदोषः स्यात् । अत एव नारदेनोक्तम् ॥

सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता ।
तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत् ॥

तां प्रतिज्ञां उत्तरो विजयी । यद्यप्यत्र साध्यं ज्ञाप्यं तद्विशिष्टधर्मी पक्ष इति भेदः तथाप्यत्र वाक्यस्याप्य ऋणादिधर्मविशेषविशिष्टतया धर्मिणोऽधमर्णादेरेव साध्यत्वात्साध्यपक्षयोरभेदाभिधानं । अत एव उपसंहारे च एवंविधः पक्ष इति भाषार्थमुक्त्वा भाषास्वरूप-

प्रपंचमाह स्वल्पाक्षर इति। निराकुलाः पौर्वापर्यविपर्यासादिशून्यः

द्यूते च व्यवहारे च प्रवृत्ते यज्ञकर्मणि।
यानि पश्यंत्युदासीनाः कर्ता तानि न पश्यती॥

इति गृह्यसंग्रहवचनात्। उदासीनेभ्यो ज्ञात्वा शोधयेत्। तच्छोधनकालमाह बृहस्पतिः॥

न्यूनाधिकं पूर्वपक्षं तावद्वादी विशोधयेत्।
न दद्यादुत्तरं यावत्प्रत्यर्थी सभ्यसन्निधौ॥

व्यासोपि

शोधयेत्पूर्वपक्षं तु यावन्नोत्तरदर्शनम्।
उत्तरेणावबद्धस्य निवृत्तं शोधनं भवेत्॥
अन्यदुक्तं लिखेद्योन्यदर्थिप्रत्यर्थिनां वचः।
चौरवच्छासयेत्तं तु धार्मिकः पृथिवीपतिः॥

नारदः

सर्वेष्वर्थविवादेषु वाक्छलेनावसीदति।
पशुस्त्रीभूऋणादाने शास्योप्यर्थान्न हीयते॥

सर्वेष्वर्थविवादेषु प्रमादाभिधानेनावसीदति। अत्रोदाहरणं पशुस्त्रीत्यादि अर्थविवादग्रहणात्। मन्युकृतविवादेषु प्रमादाभिधाने प्रकृतादप्यर्थाद्धीयते इत्यवगम्यते। यथाहमनेन शिरसि पादेन ताडित इत्यभिधाय हस्तेन ताडित इति वदन् न केवलं दंड्यः पराजीयते च। ततश्च त्वं शतं मह्यं धारयसि मत्त ऋणत्वेन गृहीतं तावद्धनकत्वादित्यादि भाषाशरीरं। तच्च संस्कृतदेशभा-

षादित्वेन यथाबोधं लेख्यं वक्तव्यं वा मूर्खाणामपि वादिप्रतिवादित्वदर्शनात्। अथोत्तरवादः। तत्र बृहस्पतिः

यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना।
दद्यात्तत्पक्षसंबद्धं प्रतिवादी तदोत्तरम्॥

संबद्धमुपयुक्तं। अन्यथा अन्यवादित्वेन भंगप्रसंगात्॰

अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः।
आहूतः प्रपलायी च हीनः पंचविधः स्मृतः॥
विप्रलापी त्रिपक्षेण मौनकृत्सप्तभिर्दिनैः।
क्रियाद्वेषी तु मासेन साक्षिभिन्नस्तु तत्क्षणात्॥

इति नारदोक्तेः। यत्रोत्तरस्वरूपं तद्भेदाश्चाह नारदः

पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम्।
अव्याख्यागम्यमित्येवमुत्तरं तद्विदो विदुः॥

पक्षस्य भाषार्थस्य व्यापकमभियोगप्रतिकूलमिति यावत्। अत एव

पूर्वपक्षार्थसंबद्धं प्रतिपक्षं निवेशयेत्।

इत्युक्तं। सारं प्रकृतोपयोगि। अनाकुलं पूर्वापरविरोधशून्यं अव्याख्यागम्यं अध्याहारादिकं विनैव प्रतीतं उत्तराभासमाह कात्यायनः

प्रकृतेन त्वसंबद्धं नात्यल्पमतिभूरि च।
पक्षैकदेशव्याप्यं च तच्च नैवोत्तरं भवेत्॥
अस्तव्यस्तपदव्यापि निगूढार्थं तदाकुलम्।
व्याख्यागम्यमसारं च नोत्तरं मन्यते बुधैः॥

हारतिलके भवदेवभट्टचरणैर्व्याख्यातं उत्तरं विभजते नारदः।

मिथ्यासंप्रतिपत्तिश्च प्रत्यवस्कन्दनं तथा।
प्राङ्न्यायश्चोत्तराः प्रोक्ताश्चत्वारः शास्त्रवेदिभिः॥
अभियुक्तोभियोगस्य यदि कुर्यादपह्नवम्।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः॥

अभियुज्यते इत्यभियोगः सहेतुकं साध्यं तस्यापह्नव इत्यर्थः। मिथ्योत्तरभेदमाहतुर्व्यासनारदौ

मिथ्यैतन्नाभिजानामि मम तत्र न सन्निधिः।
अजातश्चास्मि तत्काले इति मिथ्या चतुर्विधा॥

मिथ्यैतदिति शब्दतः नाभिजानामीत्यादिकमर्थतोऽपह्नवाः। तथा चाह कात्यायनः

श्रुत्वाभाषार्थमन्यस्तु यदि तं प्रतिषेधति।
अर्थतः शब्दतो वापि मिथ्या तु ज्ञेयमुत्तरम्॥

त्वं मह्यं शतं धारयासीति प्रतिज्ञायां मया न गृहीतं इति शब्दतः। कालविशेषगर्भायां तस्यां सत्यां तदा नाहं जात इत्यर्थतः। देशकालविशेषगर्भायां तस्यां तदा तत्र नाहमासमित्यर्थतः। देशादिमत्यां तच्छून्यायां वा तस्यां न जानामीत्यर्थतः। एवं योग्यास्मरणेनार्थतस्तद्ग्रहणप्रतिपादनात् चरमत्रयं ग्रहणावस्कंदनमुखेन ग्रहणाभावप्रतिपादकं सापदेशमिथ्योत्तरं आद्यं मिथ्योत्तरमात्रं। संप्रतिपत्तिमाह बृहस्पतिः

श्रुत्वाभियोगं प्रत्यर्थी यदि तं प्रतिपद्यते।

सा तु संप्रतिपत्तिः स्याच्छास्त्रविद्भिरुदाहृता ॥

अभियुज्यत इति अभियोगः प्रतिपद्यते अंगीकरोति तं साध्यार्थं । प्रत्यवस्कंदनमाह स एव

अर्थिनाभिहितो योर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयात्प्रत्यवस्कंदनं हि तत् ॥

तथा प्रपद्य सत्यत्वेनांगीकृत्य कारणं तत्प्रतिकूलरूपकारणं ब्रूयात्तदा तदुत्तरं प्रत्यवस्कंदनं वादुकस्यैव प्रतिकूलत्वेन वचनमित्यर्थः । प्रतिपक्षावस्कंदनात्प्रत्यवस्कंदनमिति व्यवहारमातृका । तच्च कारणोत्तरं त्रिविधं बलवत्तुल्यबलं दुर्बलं चेति । आद्योत्तरं यथा मया त्वत्तः शतं गृहीतमिति सत्यं किं तु परिशोधितमिति । अत्र उत्तरवादिन एव क्रियानिर्देशः । यथाह नारदः

अधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत् ।
विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः ॥

अधर्यं दुर्बलत्वं पूर्वपक्षस्य मध्यमोत्तरं यथा मदीयेयं भूमिः क्रमागतत्वादिति वादुक्तं । मदीयेयं भूमिः क्रमागतत्वादिति प्रतिवादिनापि तथोत्तरमिति । अत्र पूर्ववादिनः साक्ष्युपन्यासः तदसत्त्वे प्रतिवादिनः

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवंत्युत्तरवादिनः ॥

इति याज्ञवल्कीयात् । उभयतो वादिप्रतिवादिनोः साक्षिणः प्रष्टव्या इति शेषः । अधरीभूते वादिनोः साक्ष्युपन्यासासामर्थ्ये अंत्योत्तरं । यथा ममेयं भूः क्रमाग-

तत्वादिति वायुकेर्ममेयं भूर्दशवर्षोपभुज्यमानत्वादित्युत्तरं अत्र जयपराजयौ प्रागुक्तभोगानुसारेण व्यवस्थाप्यौ तत्र क्रमागतत्वे पूर्ववादिनः प्रमाणोपन्यासः। तथा चोक्तं

गुरावभिहिते हेतौ प्रतिवादिक्रिया भवेत्।
दुर्बले वादिनः प्रोक्ता क्रिया तुल्येपि वादिनः॥

प्राङ्न्यायमाह बृहस्पतिः

आचारेणावसन्नोपि पुनर्लेखयते यदि।
सोभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते॥

आचारेण व्यवहारेण अवसन्नो भंगी लेखयते भाषामिति शेषः। स वादी अस्मिन्नर्थे मया पूर्वं पराजितो वाच्यः। प्राङ्न्यायस्तु धार्यमाणत्वसामान्याभावज्ञापकः। मिथ्योत्तरादीनां संकरे का व्यवस्था इत्याकांक्षायामाहतुर्व्यासहारीतौ

मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे।
सत्यं चापि सहानेन तत्र ग्राह्यं किमुत्तरम्॥
मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम्।
यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम्॥
उत्तरं तत्तु विज्ञेयमसंकीर्णमतोन्यथा॥

शताभियोगे शतग्रहणं मिथ्या किंतु पंचाशदेव परिगृहीतास्ताश्च परिशुद्धा इति मिथ्याकारणांशयोस्तुल्य[illegible] कारणोत्तरं ग्राह्यं आदौ विचारणीयं परिशोधनेन स्मरणार्हत्वात्पश्चान्मिथ्योत्तरं। तत्र क्र-

णस्य चिरातीतस्य कष्टप्रतिपाद्यत्वादिति एवं नवत्यभि-योगे मिथ्यैतत्। षष्टिः पुराणा एव गृहीतास्तत्रापि त्रिंशत् परिशुद्धास्त्रिंशद्दास्यामीति मिथ्याकारणसत्त्वैः संकीर्णोत्तरेपि पूर्ववत्कारणोत्तरमेव ग्राह्यं मिथ्याकारणयोर्वापीति वापिशब्दाभ्यां तथा दर्शितत्वात् सत्योत्तरस्य स्वयं स्वीकारेण निर्णयानर्हत्वादिति भावः। प्राङ्न्यायेन सह न कस्यापि सांकर्यमिति तत्त्वोक्तं यदि तु शतं मिथ्या परंतु विंशतिः पुराणा गृहीतास्ते च परिशुद्धास्तदा मिथ्यांशस्य प्रचुरार्थविषयकस्य विचार उपक्रमणीयो भूयोऽनुरोधस्याभ्यर्हितत्वात्। पश्चात् स्वल्पार्थस्य विचारः। तुल्यार्थविषयत्वे तु यत्र क्रियायाः साक्ष्यादेः फलं निर्णयः शीघ्रं भवति तदंशस्यैव प्रमाणं ग्राह्यं। यथा यदि शतग्रहणे पत्रमस्ति शतापह्नवे च पंचाशत् परिशोधने साक्षिणस्तदा मिथ्योत्तर एवादौ तत्खंडनाय ग्रहणपत्रं ग्राह्यं। लिखितस्य साक्षिभ्यो बलवत्त्वेन सम्यङ् निर्णयकारित्वात्। पश्चात्पंचाशत्परिशोधने साक्षिणः प्रष्टव्याः॥

## अथ क्रियापादः।

उत्तराभिधानानंतरं याज्ञवल्क्यः

अतोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधकम्॥

अत्रार्थी वादी प्रतिवादी च स्वपक्षार्थित्वात्। व्यासः।

प्राङ्न्याये कारणोक्तौ च प्रत्यर्थी साधयेत् क्रियाम्।
मिथ्योत्तरे पूर्ववादी प्रतिपत्तौ न सा भवेत्॥

मिथ्योत्तरे न गृहीतं मयेत्यादिरूपे पूर्ववादी भाषावादी क्रियां साधयेत् । साक्ष्यादिकं निर्दिशेत्। अत्रोत्तरवादिनो न क्रियासाधकत्वं । अत्र मानुष्याः क्रियाया असंभवादिति न्यायमूलं । अत्रापि साक्ष्याद्यसंभवे उत्तरवादिन एव दिव्यं ।

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥

इति कात्यायनोक्तिः । अत्र पूर्वार्द्धेनार्थिनो दिव्यनिषेधेऽर्थात्प्रत्यर्थिनस्तत्प्राप्तौ परार्द्धाभिधानं सिद्धे सत्यारंभो नियमायेति न्यायान्नियमार्थम्। लिखनाद्यसम्भवे दिव्यान्याह याज्ञवल्क्यः ।

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥

याज्ञवल्क्यः

निन्हुते लिखितानेकमेकदेशे विभावितः ।
दाप्यः सर्वान्नृपेणार्थान्न ग्राह्यस्त्वनिवेदितः ॥

यो लिखितानेकसुवर्णादिकमपलपति स एकद्रव्ये साक्ष्यादिभिर्विभावितः सर्वान् दद्यात् । यद्येकदेशविभावनेन वादिनोऽवसादमवगम्य इदमपरं मया लेखयितुं विस्मृतमिति ब्रूते। स भाषाकालेऽनुन्यस्तं तन्न दद्यात्। एतच्च न केवलं वाचनिकं । किं त्वेकदेशविभावनात् विजानत एव तस्य तदपलापे तच्छीलत्वावधारणादपरांशेपि तथात्वमेव संभाव्यते तत्वविभावकस्या-

पि प्रक्रांतविषये यथावस्तुवादावधारणात्। अविभावितांशेऽपि सत्यवादित्वसंभावनमित्येवंरूपतर्कापरनामसंभावनाप्रत्ययानुगृहीता तस्मादेव योगीश्वरवचनात्सर्वं दापनीयमिति निर्णयः। एवं च तर्कवाक्यानुसारेण निर्णये क्रियमाणे वस्तुनोन्यथात्वेपि व्यवहारदर्शिनां न दोष इति स्मार्तभट्टाचार्याः प्राहुः। योगलोकमतानुसारिमैथिलास्तु यद्येषां मध्ये एकमपि मया गृहीतं विभावयति तदा सर्वमेव दातव्यमिति प्रतिज्ञावादिविषयत्वमेकदेशविभावितवचनस्येत्याहुः। तच्चिंत्यं। एवं च

साध्यार्थांशे निगदिते साक्षिभिः सकलं भवेत्।
स्त्रीसंगे साहसे चौर्ये यत्साध्यं परिकल्पितम्॥

इति कात्यायनवचनं तद्विषयप्रदर्शकमात्रं तेन ऋणनिःक्षेपाद्यपह्नवेपि योज्यं। यत्तु—

अनेकार्थाभियोगेपि यावत्संसाधयेद्धनी।
साक्षिभिस्तावदेवासौ लभते साधितं धनं॥

इति कात्यायनवचनं तदृणानभिज्ञपुत्रादिविषयकम्। तथा च नानाविधर्णार्थमभियुक्तस्याजानतो नाहं जानामीत्युत्तरे वादी साक्ष्यादिभिर्यावद्धनं प्रतिपादयति तावदेव पुत्रेण दातव्यमिति स्मार्तविश्वरूपजीमूतवाहनादयः प्राहुः। अनुमानाद्वरः साक्षीत्यादिना पूर्वं साक्ष्यादिभ्योऽनुमानं लघ्वित्युक्तं। सांप्रतमनुमानप्रकारमाह मनुः।

बाह्यैर्विभावयेल्लिंगैर्भावमंतर्गतं नृणाम्।

स्वरवर्णेंगिताकारैश्चक्षुषा चेष्टितेन च ॥

स्वरो गद्गदादिः वर्णोऽस्वाभाविकः इंगितं स्वेदवेपथुरोमांचादि आकारो विकृतः चक्षुषा कातरेण चेष्टितेन स्थानत्यागादिना एषां चानन्यथासिद्धेरतिदुर्निरूपत्वात् एभ्यः साक्षी बलवानिति प्रागुक्तं। याज्ञवल्क्यः।

देशाद्देशांतरं याति सृक्किणी परिलेढि च।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः।
अभियोगे च साक्ष्ये च दुष्टः स परिकीर्तितः ॥

न परोक्तां वाचं प्रतिवचनेन पूजयति चक्षुश्च परकीयवीक्षणेन निर्भुजति कुटिलीकरोति यदा मनोवाक्कायकर्मभिः स्वभावात् पूर्वोक्तां यथायोग्यं विकृतिं गच्छेत्तदा स दुष्ट इत्यर्थः। बृहस्पतिः।

लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः।
तस्य कार्यं न सिध्येत यावत्तन्न विशोधयेत् ॥

तल्लेख्यसाक्षिरूपं प्रमाणं। लेख्यशोधनप्रकारमाह कात्यायनः।

स्वहस्तलेख्यसंदेहे जीवतो वा मृतस्य च।
तत्स्वहस्तकृतैर्वान्यैः पत्रैस्तल्लेख्यनिर्णयः ॥

## अथ लिखितम् ॥

तच्च द्विविधं। तदाह नारदः।

लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा।
असाक्षिकं साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः॥
मृतास्तु साक्षिणो यत्र धनिकर्णिकलेखकाः।
तदप्यपार्थं करणे मृते स्वाधिः स्थिराश्रयात्॥
दर्शितं प्रतिकालं च पाठितं स्मारितं च यत्।
लेख्यं सिध्यति सर्वत्र मृतेष्वपि च साक्षिषु॥
लेख्ये देशांतरस्थे च दग्धे दुर्लिखिते हृते।
सतस्तत्कालहरणमसतो द्रष्टृदर्शनम्॥
छिन्नभिन्नहृतोन्मृष्टनष्टदुर्लिखितेषु च।
कर्त्तव्यमन्यल्लिखितं खेष लेख्यविधिः स्मृतः॥
लेख्यं यत्रान्यनामांकं हेत्वंतरकृतं भवेत्।
प्रतिपत्तौ परीक्ष्यं तत्संबंधागमहेतुभिः॥

स्वलेख्यमसाक्षिकमपि प्रमाणं। अन्यद्वारा लेख्यं साक्षिमदिति यथासंख्यमन्वयः। देशस्थितेर्यस्मिन् देशे यादृशी लेख्यस्थितिः प्रवर्तते तत्र तादृश्याः। तयोः स्वहस्तान्यहस्तकृतयोः। मृता इति साक्ष्यादौ मृते पुत्रादिस्थं लेख्यपत्रं न सिध्यति। यद्याधिभोगोऽस्ति तदा तदपि प्रमाणमित्यर्थः। व्यक्तमाह कात्यायनः।

यत्र पंचत्वमापन्नो लेखकः सह साक्षिभिः।
ऋणिको धनिकश्चैव नैव पत्रं प्रमाणयेत्॥

दर्शितमिति तथाविधमपि पत्रं यदि पूर्वमृणिकादिसंनिधौ दर्शितं पाठितं स्मारितं वा धनिकेनान्येन वा तदा तदपि सिध्यतीत्यर्थः। सतो देशांतरस्थस्य पत्रस्य

तत्कालहरणं पत्रानयनकालप्रतीक्षणं । असतो दग्धादेः तदवलोककोपन्यासः । लेख्यमिति यत्पत्रं केनापि हेतुना अन्यनामचिह्नितं तत्र विप्रतिपत्तौ यन्नाम्ना पत्रं तेन सहास्य विश्वासहेतुभूतसंबंधागमरूपकारणैर्निर्णेतव्यं । लेख्यस्याप्रामाण्यशंकायां लेख्यगृहीत्रा प्रागुक्तशोधनप्रकारेण तन्निरसनीयं तत्पुत्रेण तु लेख्याधीनो भोग एव उपन्यास्यो न तु लेख्यमुद्धरणीयमित्याह कात्यायनः ।

आहर्ता भुक्तियुक्तोऽपि लेख्यदोषान् विशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ॥

बृहस्पतिः ।

उद्धरेल्लेख्यमाहर्ता तत्पुत्रोभुक्तिमेव तु ।
अभियुक्तः प्रमीतश्चेत्तत्सुतोपि तदुद्धरेत् ॥

अभियुक्त इति लेख्यसाधुत्वज्ञापनार्थं । अभियुक्ते लेख्यग्रहीतरि तदविज्ञाप्यैव मृते तत्पुत्रेण तत्साधुत्वं साध्यमित्यर्थः । तत्साधनं च स्वहस्तलिखनादिनेति प्रागुक्तं । नारदः

अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिश्चतुः पंचकृत्वो वा परतोर्थं तमाहरेत् ॥

यदा धनिकेनाधमर्णिकस्त्रिश्चतुःपंचकृत्वो वा त्वं मे इदं धारयसि इति पुनःपुनर्निर्देश्यमानोऽपि तद्वाक्यप्रतिघातं न कृतवान् तदोत्तरं कालमनेनाभ्युपगतोऽयमर्थ इति निर्णीय तदर्थमृणिकाद्दापयेदित्यर्थः । मनुः ।

अर्थेपव्ययमानं तु कारणेन विभावितम् ।

दापयेद्धनिकस्यार्थं दंडलेशं च शक्तितः ॥

अपव्ययमानं अपलपंतं कारणेन साक्ष्यादिप्रमाणेन॥

## अथ निर्णयपादः ॥

तत्र नारदः ।

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥
स्वयमभ्युपपन्नोऽपि स्वचर्यावसितोऽपि सन् ।
क्रियावसन्नोऽप्यर्हत्तु परं सभ्यावधारणम् ॥
सभ्यैरवधृतः पश्चाद्राज्ञा शास्यः स्वशास्त्रतः ।

यस्य वादिनः प्रतिवादिनो वा साक्षिण इत्युपलक्षणं साक्षिलिखितभुक्तियुक्तिदिव्यशपथानां मध्येऽन्यतमं प्रमाणं यस्यैव प्रतिज्ञासत्यत्वप्रतिपादकं स एव जयी। अन्यथा पराजय इति प्रत्येतव्यं । स्वयमभ्युपपन्नः आत्मनैवांगीकृतस्वपराजयः स्वचर्यावसितः स कम्पस्वेदवैवर्ण्यादिना पराजितत्वेनावधारितः क्रियावसन्नः साक्ष्यादिना पराजयं प्राप्तः परमनंतरं सभ्यावधारणमर्हेत्सभासदां मिलितानां पराजितोयमिति निर्णयमर्हेत् ॥

## अथ साक्षिविधिः॥

तत्र साक्षिणमाह मनुः ।

समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यति ।

एतत्तु प्रमाणमात्रोपलक्षणम् ।

अनुभावी च यः कश्चित्कुर्यात्साक्ष्यं विवादिनाम् ॥

इति मनुवचनांतरात् । सं च द्विविधः कृतोऽकृतश्च

एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः।
कृतः पंचविधो ज्ञेयः षड्विधोऽकृत इत्यपि ॥

इति नारदवचनात्। कृतः साक्षित्वेन निरूपितः। अनिरूपितश्चाकृतः। तद्भेदानप्याह स एव।

लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः।

लिखितादीनां लक्षणान्याह कात्यायनः।

अर्थिना स्वयमानीतो यो लेख्ये संनिवेश्यते।
स साक्षी लिखितो नाम स्मारितः पत्रकाद्दते ॥
यस्तु कार्यप्रसिद्ध्यर्थं दृष्ट्वा कार्यं पुनःपुनः।
स्मार्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते ॥

यस्तु यदृच्छयागतः यदृच्छया भिज्ञः अनयोः पत्रारूढत्वेपि भेदस्तेनैव दर्शितः।

प्रयोजनार्थमानीतः प्रसंगादागतश्च यः।
द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ ॥
अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थीवचनं स्फुटम्।
यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते ॥
साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञकः ॥

अकृतमपि साक्षिणं मनुरप्याह।

यत्रानिबद्धो वीक्षेत शृणुयाद्वापि किंचन।
पृष्टस्तत्रापि तद्ब्रूयात् यथादृष्टं यथाश्रुतम् ॥

अनिबद्धस्तु तत्र साक्षी भवेत्यनियुक्तः। परंपरयापि

श्रवणमाह नारदोपि।

साक्षिणामपि यः साक्ष्यं समक्षं परिभाषते।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञकः॥

साक्ष्यं परिभाषतां वचो यः स्वयं शृणोति अर्थिना-वा श्राव्यते स श्रवणात् श्रावणाच्च उत्तरसंज्ञकः साक्षी-त्यर्थः। तेषां भेदोऽवसरे वक्तव्यः। तेनान्यतरवाद्यभि-हितार्थविषयकमदृष्टकरणजं ज्ञानं साक्ष्यमिति स्थितम्। तत्र नारदः॥

तेषामपि न बालः स्यान्नैको न स्त्री न दुष्टकृत्।
न बांधवो न चारातिर्ब्रूयुस्ते कार्यमन्यथा॥

कार्यं सत्यमपि अन्यथा मिथ्यात्वे न ब्रूयुः। एवं च यदि परमधार्मिकत्वेन बांधवादीनामपि सत्यवादित्वेन निश्चीयते तदा तेपि साक्षिणो भवंति तेषां साक्ष्यभिधा-यकं वक्ष्यमाणवचनमपि एतद्विषयकं॥ याज्ञवल्क्यः।

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः।
धर्मप्रधाना ऋजवः पुत्रवंतो धनान्विताः॥
अवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियारताः।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः॥

यथाजाति यो यज्जातीयः तस्य तज्जातीयः साक्षी। यथा स्त्रीणां स्त्रियोंत्यजानामंत्यजाः। यथावर्णं ब्राह्मणा-नां ब्राह्मणाः। क्षत्रियाणां क्षत्रियाः। अभावे तु तत्तद्भेदं विना सर्वे सर्वेषु साक्षिणो भवन्ति। तपस्विन इत्य-स्यापवादः साहसादौ वक्ष्यते। अवरा इत्यस्यापवादमाह

याज्ञवल्क्यः ।

उभयानुमतः साक्षी भवेदेकोपि धर्मवित् ।

अपिना द्वावपीति मिताक्षरा उभयानुमतत्वं धर्मवित्त्वं च मिलितं तंत्र । यथा विष्णुः । अभिमतगुणसंपन्नस्तु-भयानुमत एकोपि । अतएवश्रोत्रियमप्येकं निषेधयति ।

नव सप्ताथ वा पंच चत्वारस्त्रय एव वा ।

उभौ तु श्रोत्रियौ ग्राह्यौ नैकं पृच्छेत्कदाचन ॥

एकोऽभिमतगुणसंपन्नः उभयानुमतः प्रधानकल्पः तदभावे उभयानुमतमात्रोऽपि ग्राह्यः । तथा च नारदः ।

उभयानुमतो यः स्यात् द्वयोर्विवदमानयोः ।

भवेदेकोप्यदुष्टश्चेत्प्रष्टव्यः स्यात्स संसदि ॥

उभयानुमत एकोऽलुब्धोऽस्तेनत्वादिना सर्वजनप्रसिद्धश्चेत्तदा साक्षित्वेन सभायां प्रष्टव्यः । तथात्वे स्नेहवैरादिसन्चेपकीर्तिभिया सत्याभिधानसंभवादित्याशयविचारस्य तत्त्वनिर्णयार्थत्वात् । तदाह मनुः ।

एकोप्यलुब्धः साक्षी स्यात् बव्हः शुच्योपि न स्त्रियः।

स्त्रीबुद्धेरस्थिरत्वाच्च दोषैश्चान्येपि ये वृताः ॥

एको लुब्धस्त्वसाक्षी स्यात् इति व्यवहारमातृकायां पाठो न युक्तः लुब्धाश्चेद्बहवोऽपि साक्षिणो न भवंति इति एकपदवैयर्थ्यापत्तेः । भवतु वा तत्पाठः । तथापि एक इत्यनुरोधात्तन्निषेधमुखेनालुब्धस्योभयानुमतिसत्वे धर्मवित्त्वमंतरेण साक्षित्वं बोध्यते इत्यर्थतो न विरोधः । अत एव विश्वरूपप्रभृतीनां उभयानुमत एक

एव साक्षीति व्याख्याने धर्मविदिति नोक्तं । दोषैस्तेया-दिभिः । तथा च नारदः ।

स्तेनाः साहसिका धूर्ताः कितवाः क्रोधकाश्च ये ।
असाक्षिणस्तु ते ज्ञेयास्तेषु सत्यं न विद्यते ॥

कितवो द्यूतकारः । याज्ञवल्क्योपि ।

स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ।
रंगावतारिपापंडिकूटकृद्विकलेन्द्रियाः ॥
पतिताप्तार्थसंबंधिसहायरिपुतस्कराः ।
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ॥

अभिशस्तोऽभियुक्तो ब्रह्महत्यादिना । रंगावतारी चारणः । पापंडिनो निर्ग्रंथप्रभृतयः । कूटकृत् कपटलेख्यादिकारी । विकलेंद्रियः श्रोत्रादिरहितः । पतितो ब्रह्महा आप्तः सुहृत् अर्थसंबंधी विप्रतिपद्यमानार्थसंबंधी सहायः एककार्यः । दृष्टदोषः दृष्टमिथ्यावाक्यः । निर्धूतो बंधुभिस्त्यक्तः आद्यशब्दादन्येषामपि स्मृत्यंतरोक्तानां दोषादसाक्षिणां ग्रहणं । एते उभयानुमता अपि साक्षिणो न भवंतीति मिताक्षरा । तत्रापवादमाह उशनाः

दासोंधो बधिरः कुष्ठी स्त्रीबालस्थविरादयः ।
एतेप्यनभिसंबंधात्साहसे साक्षिणो मताः ॥

स्थविरो ग्लानेंद्रियग्रामः । आदिशब्दात्कितवादयः । उभयानुमतत्वाभावेपि शुचिक्रियत्वादिगुणयुक्त एकोपि ग्राह्यः । तथा च व्यासः ।

शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक् ।

प्रमाणमेकोपि भवेत्साहसेषु विशेषतः ॥

अनुभूतवाक् स्थानांतरे सत्यवादित्वेन ख्यातः। साहसमाह नारदः ।

मनुष्यमारणं स्तेयं परदाराभिमर्शनम् ।
पारुष्यमुभयं चैव साहसं पंचधा स्मृतम् ॥

उभयं वाग्दंडभेदात् । कात्यायनः ।

अभ्यंतरर्णनिक्षेपसाक्ष्यमेकोपि दापयेत् ।
अर्थिना प्रहितः साक्षी भवेदेकोपि याचिते ॥
संस्कृतं येन यत् पण्यं तत्तेनैव विभावयेत् ।
एक एव प्रमाणं स्यात्स विवादे प्रकीर्तितः ॥

संस्कृतं निर्मितं पण्यं कुंडलादिः । विष्णुः ।

स्तेयसाहसवाग्दंडपारुष्यग्रहणेषु च ।
साक्षिणो न परीक्ष्यास्ते परदारादिकर्मणाम् ।

निह्नवेनैव क्रियमाणत्वाद्वैवादेव परं साक्षिणो भवंतीति कृत्वा न साक्षिणां परीक्षेत्युक्तं । तेषां वाक्यं तु मित्रारिभावादिनिरूपणेनोपपत्त्यनुपपत्तिभ्यामालोचनीयं । न तु वाक्यमात्रादिति व्यवहारमातृका । अत एव कात्यायनः ।

ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु ।
साहसात्ययकेनैव परीक्षा कुत्रचित्स्मृता ॥

श्रोत्रियादीनामसाक्ष्यमाह नारदः ।

श्रोत्रियास्तापसा वृद्धा हेतुप्रव्रजिता नराः ।
वचनात्तेष्वसाक्षित्वं नात्र हेतुरुदाहृतः ॥

श्रोत्रियमाह देवलः।

एकां शाखां सकल्पां वा षड्भिरंगैरधीत्य वा।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्॥

वचनादिति श्रोत्रियादिरूपाभिधानात् न तत्रान्यो हेतुः। तथा च तेषां स्वीयवैदिककर्मकरणव्यग्रतया परकीयकार्यस्य विस्मरणसंभवात्साक्षित्वरूपलघुकार्ये तच्छापभयेन व्यवहारद्रष्टारोपि न तान् पृच्छंतीति तत्साक्षिकरणानर्थक्याच्च न ते साक्षिणः कर्तव्याः। किं तु यदि स्वयमकृता अपि साक्ष्यं वदंति तदा साक्षिणो भवंत्येव उभौ तौ श्रोत्रियौ स्यातामिति वचनात्। वृद्धस्यासाक्षित्वं ग्लानेंद्रियत्वात्। मनुः।

स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा द्विजाः।
शूद्राः संतश्च शूद्राणामंत्यानामंत्ययोनयः॥
अंतर्वेश्मन्यरण्ये वा शरीरस्यापि चात्यये।
स्त्रियाप्यसंभवे कार्यं बालेन स्थविरेण वा॥
शिष्येण बंधुना वापि दासेन भृतकेन वा।
देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान्॥
उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्ने वै शुचिः शुचीन्।
ब्रूहीति ब्राह्मणं पृच्छेत्सत्यं ब्रूहीति पार्थिवम्॥
गोबीजकांचनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः।

गोबीजकांचनाहारे यत्पापं तत्तवानृतभाषणे स्यादिति वैश्यं। एतत्साक्ष्यानृताभिधाने भवान्सर्वपातकैः संबध्यते इत्युक्त्वा शूद्रं पृच्छेत्॥

ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनः ।
मित्रद्रुहः कृतघ्नस्य तेते स्युर्बदतो मृषा ॥
इति मनूक्त दूषणं श्रावयेत् । कृतघ्नमाह ॥
भर्तृपिंडापहर्ता च पितृपिंडापहारकः ।
कृतस्य दोषं वदति स कामान्न करोति यः ॥
तस्माद्गृहीत्वा विद्यां च दक्षिणां न प्रयच्छति ।
न स्मरेच्च कृतं यश्च आश्रमान् यश्च दूषयेत् ॥
पुत्रान् स्त्रियश्च यो द्वेष्टि यश्च तान् घातयेन्नरः ।
सर्वांस्तानृषिभिः सार्धं कृतघ्नानब्रवीन्मनुः ॥
बौधायनः ॥
पंच पश्वनृते हंति दश हंति गवानृते ।
शतमश्वानृते हंति सहस्रं पुरुषानृते ॥
हंति जातानजातांश्च हिरण्यार्थेनृतं वदन् ।
सर्वं भूम्यनृते हंति साक्ष्यं साक्षी मृषा वदन् ॥
अश्वमेधसहस्रं च सत्यं च तुल्या धृतम् ।
अश्वमेधसहस्राणि सत्यमेवातिरिच्यते ॥
इति मनुनारदोक्तं फलं श्रावयेत् । याज्ञवल्क्यः ।
न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।
सकूटसाक्षिणां पापैस्तुल्यो दंडेन चैव हि ॥
कात्यायनः ।
अवीचिनरके कल्पं वसेयुः कूटसाक्षिणः ।
तत्रापवादमाह
वर्णानां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्

तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः

गौतमः "नानृतवचने दोषो जीवनं चेत्तदधीनं न तु पापीयसो जीवनम्" इति। महाभारते

न नर्मयुक्तं वचनं हिनस्ति न स्त्रीपु राजन्न विवाहकाले।
प्राणात्यये सर्वधनापहारे पंचानृतान्याहुरपातकानि॥

कात्यायनः

समवेतैश्च यद्दृष्टं वक्तव्यं तत्तथैव हि।
विभिन्नैनैव कार्यं तु तद्वक्तव्यं पृथक्पृथक्॥
भिन्नकाले तु यत्कार्यं विज्ञातं तत्र साक्षिभिः।
एकैकं वादयेत्तत्र भिन्नकाले तु तद्भृगुः॥
नापृष्टैरनियुक्तैर्वा सत्यंसत्यं प्रयत्नतः।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्थानमागतैः॥
अनुद्वेगेन चित्तेन दृष्टं सम्यग्विदा तु यत्।
प्रत्यक्षं तत्स्मृतं कार्यं साक्ष्यं साक्षी तु तद्वदेत्॥

तथा

यः साक्ष्यं श्रावितोऽन्येभ्यो निन्हुते तमसावृतः।
स दाप्योऽष्टगुणं द्रव्यं ब्राह्मणं तु विवासयेत्॥

त्वमन्येभ्यः साक्ष्यं श्रावयेति वादिना प्रयुक्तो यः श्रावितः एवंभूतोपि सभायां निगदकाले साक्ष्यं निन्हुते यस्तस्याष्टगुणो दंड इत्यर्थः। याज्ञवल्क्यः।

द्वैधे बहूनां वचनं समेपु गुणिनां तथा।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः॥

तेषां वचो ग्राह्यमित्यर्थः। यत्तु कात्यायनवचनं

साक्षिणां लिखितानां च निर्दिष्टानां तु वादिना ।
तेषामेकोऽन्यथावादी भेदात्सर्वेप्यसाक्षिणः ॥

इति । तत्र त्रयाणां साक्षिणां मध्ये एकस्यान्यथावादेऽपरस्य तत्तुल्यस्य सत्प्रतिपक्षतया तृतीयस्य किंचिद्वादित्वे तत्र भेदात् परस्परविरुद्धार्थाभिधानभेदात् साक्षिभ्यो न निर्णय इत्येतत्परं । बृहस्पतिस्तु षट्कर्मनिष्ठानां ग्रहणमाह । गुणिद्वैधे क्रियावतामित्यनेन तुल्यरूपाणां द्वैधे तु न साक्षिभ्यो निर्णयः । किं तु तत्र दिव्ये

एषामन्यतमाभावे दिव्यान्यतममुच्यते ।

इति वचनात् । तथा

साक्षिणोर्थिसमुद्दिष्टान्सत्सु दोषेषु दूषयेत् ।
अदुष्टं दूषयन् वादी तत्समं दंडमर्हति ॥

तत्समं विवादविषयसमं । सभासदादिविदितदूषणमेव ग्राह्यं नतु त्र्यवरादिसाक्षिभिः प्रतिपाद्यं । अन्यथानवस्थाप्रसंग इत्याह नारदः

सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्जनात् ॥
अन्यैस्तु साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणाम् ।
अनवस्था भवेद्दोषस्तेषामन्यस्य संभवात् ॥
असाध्यं साधनानर्हं सिद्धत्वाद्दोषवर्तनात् ॥

अनवस्थादोषविरहात् तस्मात्प्रसिद्धं दूषणमेव ग्राह्यं । प्रसिद्धदूषणमाह कात्यायनः

बालोऽज्ञानादसत्यात् स्त्री पापाभ्यासाच्च कूटकृत् ।

विब्रूयाद्बांधवः स्नेहाद्वैरनिर्यातनादरिः॥
यः साक्षी नैव निर्दिष्टो नाहूतो नैव देशितः।
ब्रूयान्मिथ्येति तथ्यं वा दंड्यः सोऽपि नराधमः॥

कात्यायनः।

क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु।
लेख्ये सति विवादेषु न स्याद्दिव्यं न साक्षिणः॥
समत्वं साक्षिणां यत्र दिव्यैस्तत्र विशोधयेत्।

एतत्तु संशयानुच्छेदे बोध्यं। बृहस्पतिः

प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात्।
जयपत्रस्य वा दानाज्जयी लोके निगद्यते॥

## अथ जयपत्रलेखनम्

तत्प्रकारमाह स एव

यद्वृत्तंव्यहारात्तु पूर्वपक्षोत्तरादिकम्।
क्रियावधारणोपेतं जयपत्रेखिलं लिखेत्॥
पूर्वोत्तरक्रियायुक्तं निर्णयांतं यदा नृपः॥
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते॥

तथा कात्यायनः

अर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा साक्षिणस्तथा।
निर्णयश्च तथा तस्य यथाचारधृतं स्वयम्॥
एतद्यथाक्षरं लेख्यं यथापूर्वं निवेशयेत्।
सभासदश्च ये तत्र धर्मशास्त्रविदस्तथा॥

ततश्च भाषोत्तरक्रिया च यत्र साक्ष्यादिनिर्णयश्च जयपराजयावधारणं निर्णयकालावस्थिता मध्यस्थाश्चे-

स्यादिकं सर्वं लेखनीयं निरूपणस्य सम्यक्त्वप्रदर्शनार्थं। तथा भाषोत्तरलिखनं हेत्वंतरेण पुनर्न्यायप्रत्यवस्थाननिरासार्थं न हि गृहीतं मयेति मिथ्योत्तरेण जितस्य पुनः परिशोधितं मयेति प्रत्यवस्थानं भवति। प्रमाणलिखनं तु पुनःपुनः प्रमाणांतरोपन्यासनिरासार्थं।तदाह कात्यायनः

क्रियां बलवतीं त्यक्त्वा दुर्बलं योऽवलंबते।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियाम्॥
निर्णीते व्यवहारे तु प्रमाणमफलं भवेत्।
लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत्।
यथा पक्केषु धान्येषु निष्फलाः प्रावृषो गुणाः॥
निर्णीतव्यवहाराणां प्रमाणमफलं तथा॥

मनुः।

तीरितं चानुशिष्टं च यत्र क्वचन यद्भवेत्।
कृतं तद्धर्मतो विद्वान् न तद्भूयो निवर्तयेत्॥

अनुशिष्टं साक्ष्यादिभिर्निर्णीतं। अत एव तीरितं प्राड्विवाकादिभिः समापितं। यत्तद्विवादपदं पुनर्न निवर्तयेदित्यर्थः। यत्र तीरितानुशिष्टयोरप्यधर्मकृतत्वं मत्वा पराजयी पुनर्द्विगुणदंडनमंगीकृत्य प्रत्यवतिष्ठते। तत्र पुनर्न्यायदर्शनमाह नारदः।

तीरितं चानुशिष्टं च यो मन्येत विधर्मतः।
द्विगुणं दंडमादाय तत्कार्यं पुनरुद्धरेत्॥

असद्विचारे विचारांतरमाह स एव।

असाक्षिकं तु यद्दृष्टं विमार्गेण च तीरितम्।

असंमतमतैर्जुष्टं पुनर्दर्शनमर्हति ॥

असाक्षिकमिति अप्रमाणमात्रोपलक्षणम्। याज्ञवल्क्यः

दुर्दृष्टं तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु।
सभ्याः सजयिनो दंड्या विवादे द्विगुणं दमम् ॥

अत एवाह नारदः।

साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः।
स्वचर्यावसितानां तु नास्ति पौनर्भवो विधिः ॥

साक्षिकथनेन सभ्यावधारणेन च प्राप्तावसादाद्दोषदर्शने पुनर्न्यायदर्शनं स्वव्यापारेण विरुद्धभाषणादिभिः प्राप्तावसादानां नास्ति पुनर्न्यायः॥ नारदः।

कामक्रोधाभिभूतार्तभयव्यसनपीडिताः।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥ ५ ॥

अथ क्रियाबलाबलम् ॥

तत्र याज्ञवल्क्यः।

सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया।
आदौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥

अत्र क्रिया समानजातीया बोद्धव्या अत एव बृहस्पतिरप्याह।

द्विकेनार्थं समादाय प्रपन्नः पंचकं तु यः।
लाभं तत्र प्रमाणं स्यात्पश्चिमं यद्विनिश्चितम् ॥

अत्र मिश्रपुरस्कृतोयं वचनार्थः। द्विकशतवृद्ध्या प्रार्थमादाय ऋणिकः कयापि स्वकार्यतया शते पंचपणलाभदानं चेदंगीकरोति तदा पश्चिमं प्रमाणं उत्तरा क्रि-

या प्रमाणमिति अनयोश्च क्रिययोर्वृद्धिव्यवस्थात्वेन जातमुत्तरक्रियाबलवत्त्वमौत्सर्गिकं। अस्यापवाद आध्यादौ तेन पुनराहितं पुनर्दत्तं पुनर्विक्रीतं च निवर्त्यं उपलक्षणं चैतत्। तेन दत्त्वा विक्रीतं विक्रीय वा दत्तं निवर्त्यं अस्वामिकृतत्वाविशेषात्। अत एवोक्तं।

अस्वामिना कृतो यस्तु दायो विक्रय एव वा।
अकृतः स तु विज्ञेयो व्यवहारे यथास्थिति॥

बृहस्पतिः।

उत्तरोत्तरबंधेन प्राग्बंधः शिथिलो भवेत्।
यः पश्चिमक्रियाकारः स पूर्वाद्बलवत्तरः॥
न्यासं कृत्वोत्तरं पूर्वं ततश्चाधिं करोति यः।
विक्रियं वा क्रिया तत्र पाश्चिमा बलत्तरा॥

बंधोऽत्र व्यवस्था तेन पूर्वव्यवस्था दुर्बला उत्तरा च क्रिया बलवतीत्यर्थः। इदमेवोदाहरति स्वयं न्यासमित्यादि। प्रथमं न्यासमुत्तरं आधिं प्रथमं आधिमुत्तरं। विक्रियं वाशब्दाद्दानमपीत्यर्थः। न्यासोत्र धारणमात्रं आधिस्तु परवशीकरणमित्यनयोराधिर्बलवान् आध्यपेक्षया स्वस्वत्वध्वंसफलिकाक्रियादानविक्रयादिरूपा बलवती नतु बंधकस्तदजनको बलवानिति। विक्रयादेः पूर्वस्वत्वध्वंसफलकस्य पुनः करणे प्रथम एव बलवान्। आध्यादेश्च पूर्वस्वत्वध्वंसाजनकस्य च पुनः करणेप्येवं। पूर्वस्वत्वध्वंसाजनकतज्जनकयोस्तु चरमो बलवानिति फलितोर्थः। महामहोपाध्यायवाचस्पतिमिश्रचंडेश्वरा-

दिभिरप्येवं व्यख्याय व्यवहारोपि तथेत्युपवर्णितम् ॥

इति विद्वद्विरचिते विवादार्णवसेतुके ॥

व्यवहारलक्षणाद्यैस्तरंगः पंचमो गतः ॥ ५ ॥ ५ ॥

षष्ठोर्मिः ॥

## अथ निक्षेपः ॥

तत्र बृहस्पतिः ॥

ऋणादानप्रयोगादिदापनांतं प्रकीर्तितम् ।
निःक्षेपस्याधुना सम्यग्विधानं श्रूयतामिति ॥

तत्रादौ तत्स्वरूपमाह॥ नारदः

स्वं द्रव्यं यत्र विश्वासान्निक्षिपत्यविशंकितः ।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥

विश्वासोऽवश्यंप्रात्यमेवेत्यादिनिश्चयः । अविशंकितो ऽप्रातिशंकाशून्यः । बृहस्पतिः ॥

राजचौरादिकभयात् दायादानां च वंचनात् ।
स्थाप्यतेऽन्यत्र यद्द्रव्यं न्यासः स परिकीर्तितः ॥

परं संबोध्य परस्थाने द्रव्यधारणमेव न्यास इति तात्पर्यार्थः । अन्वाहितस्वरूपमाह कात्यायनः ॥

अर्थमार्गेण कार्येषु अमुष्मिन्वचनान्मम ।
दद्यास्त्वमिति यो दत्तः स इहान्वाधिरुच्यते॥

एकस्मिन् यदर्पितं वस्तु तेन पुरुषांतरे अमुष्मिन् स्वामिनि त्वं दास्यसीति निक्षिप्तं तदन्वाधिरुच्यते इत्यर्थः अत्र हलायुधस्तु अत्र मार्गेणेति पठित्वा अत्र एषु कार्येषु मार्गेण याचनेन अमुष्मिन्पुरुषे त्वं दद्या इति परिभाष्य यत्समर्पितं तदन्वाधिरुच्यते इति व्याख्यातवान्। मनुः।

कुलजे वृत्तसंपन्ने धर्मज्ञे सत्यवादिनि ।
महपक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः॥

वृत्तसंपन्ने सदाचारवति महापक्षे बहुबंधौ आर्ये ऋजुप्रकृतौ निक्षेपं निक्षेप्यम् ॥ बृहस्पतिः ।

स्थानं गृहं गृहस्थं च तद्बलं विभवं गुणान् ।
सत्यं शौचं बंधुजनं परीक्ष्य स्थापयेन्निधिम् ॥

निधिं निक्षेपं । याज्ञवल्क्यः ।

वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥

वासनं निक्षेपाधारभूतं पुटकादि तत्स्थं तदीयरूपसंख्यादिकमनभिधाय यत्परस्य हस्ते स्थाप्यते तदौपनिधिकं। तत्तथैव मुद्रादिचिह्नितं प्रति देयमिति दीपकलिका नारदः

स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।
प्रतिदानं तथैवास्य प्रत्ययः स्याद्विपर्यये ॥

विपर्यये प्रत्ययं दिव्यं दद्यात् । बृहस्पतिः ।

भर्तृद्रोहे यथा नार्याः पुंसः पुत्रसुहृद्वधे ।
दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ॥
न्यासद्रव्यं न गृह्णीयात्तन्नाशस्त्वयशस्करः ।
गृहीतं पालयेद्यत्नात्सकृद्याचितमर्पयेत् ॥

बृहस्पतिः

स्थापितं येन विधिना येन यच्च यथाविधि ।
तथैव तस्य दातव्यं न देयं प्रत्यनंतरे ॥

प्रत्यनंतरे पुत्रादौ। मनुः

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनंतरे।
न स राज्ञा नियोक्तव्यो न निक्षेप्तुश्च बंधुभिः॥

मृते निक्षेप्तरि प्रत्यनंतरेपि दानं न राजपर्यनुयोगायेत्यर्थः। स्वयमेवेत्यनेन जीवति निक्षेप्तरि प्रत्यनंतरेण याच्यमानमपि न देयं मृते त्वयाच्यमानेनापि देयमिति सूचितं। नारदः

ग्रहीतुः सह योऽर्थेन नष्टो नष्टः सदायिनः।
दैवराजकृते तद्वन्न चेत्तज्जिह्मकारितम्॥

ग्रहीतुरर्थेन सह यो निक्षेपो नष्टः स दायिनो निक्षेप्तुरेव नष्ट इत्यर्थः। राजकृतेपि ग्रहीतृकौटिल्यात्कृते देयमेव ग्रहीत्रा तेन ग्रहीत्रपराधो दाने तदपराधस्त्वदाने हेतुरिति मंतव्यं। एवमेव मिश्राः। बृहस्पतिरपि

दैवराजोपघातेन यदि तन्नाशमाप्नुयात्

ग्रहीतृद्रव्यसहितनिक्षेप्यनाशोपन्यासस्तदीयाशेषदोषनिरासार्थः। एवं च यदि तदीयापराधं विना निक्षिप्तमात्रमपि नष्टं भवति तदा न तद्देयमिति तात्पर्यार्थः। रत्नाकरादयो ऽप्येवं। मनोरप्येतत्परता

चौरैर्हृतं जलेनोढमग्निना दग्धमेव च।
न दद्याद्यदि तस्मात्स न संहरति किंचन॥

तस्मान्निक्षिप्तधनात् चौरैर्हृतं उदकेन देशांतरं प्रापितमग्निना वा दग्धं निक्षेपं निक्षेपधारी न दद्यात्। यदि स्वयं किंचित्तस्मान्नापहरतीति कुल्लूकभट्टः। यत्र तु नि-

क्षेपधारिणा द्रव्यनाशहेतावुद्भावितेऽपि उपेक्षान्यतद्दोषादेव निक्षिप्तं विनष्टमिति ज्ञायते तदा निक्षेपधारक एव दद्यादित्याह कात्यायनः

ग्राहकस्य तु यद्दोषान्नष्टं तु ग्राहकस्य तत्

देयमिति शेषः। तथा

यस्य दोषेण यत्किंचिद्विनश्येत न्हियेत वा।
तद्द्रव्यं सोदयं दाप्यो दैवराजकृताद्विना॥

राजकृते पि तद्दोषात्कृते दद्यादेवेत्युक्तमसकृत् यत्कार्यमुद्दिश्य यद्याचितकं तस्मिन्कार्ये कृते काले वा पूर्णे याचितोपि स्वामिना ग्रहीता यदि न ददाति तदा तद्दैवराजादिनष्टमपि ग्रहीता मूल्यादिद्वारेण दद्यादेवेत्याह याचितकमुपक्रम्य कात्यायनः

प्राप्ते काले कृते कार्ये न दद्याद्याचितोपि सन्।
तस्मिन्नष्टे हृते वाथ ग्रहीता मूल्यमाहरेत्॥

आहरेद्दद्यात्। बृहस्पतिः।

भेदेनोपेक्षया न्यासं ग्रहीता यद्विऽनाशयेत्।
याच्यमानो न दद्याद्वा दाप्यं तत्सोदयं भवेत्॥

भेदेन स्वद्रव्यात् बहिर्भावेन उपेक्षया। नारदः।

याच्यमानोपि निक्षेपं यो दातुर्न प्रयच्छति।
दंड्यः स राज्ञो भवति नष्टे दाप्यस्तु तत्समम्॥
यत्रार्थे साधयेत्तेन निक्षेप्तुरननुज्ञया।
तत्रापि दंड्यः स भवेत्तं च सोदयमाहरेत्॥

अननुज्ञया विमत्या। बृहस्पतिरपि

न्यासद्रव्येण यः कश्चित्साधयेदर्थमात्मनः ।
दंड्यः स राज्ञो भवति दाप्यस्तच्चापि सोदयम् ॥

अत्राप्यननुज्ञयेति विवक्षितं । व्यासः

भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम् ।
किंचिन्न्यूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितम् ॥
उपद्राभिश्च यः कश्चित्परद्रव्यं हरेन्नरः ।
ससहायः स हंतव्यः प्रकाशं विविधैर्वधैः ॥

उपधा छलं। सहायो हरणसहकारी। वधस्ताडनबंधनादिः। अन्यत्राप्येवं जातीयेष्वेवमेव विधिः। तथा च बृहस्पतिः

अन्वाहिते याचिते च शिल्पिन्यासे तथैव च ।
एष एवोदितो धर्मस्तथैव शरणागते ॥

शिल्पिन्यासे ऽलंकारादिघटनार्थं शिल्पिषु समर्पिते सुवर्णादौ उपधाभिरेषां हरणे उक्तैव शास्तिः। पुनराह स एव

यैस्तु संस्क्रियते न्यासो दिवसैः परिनिश्चितैः ।
तदूर्ध्वं स्थापयन् शिल्पी दाप्यो दैवहतोपि सन् ॥

घटनावधि दिनातिक्रमे तु शिल्पिदेयता न तदभ्यंतर इत्यर्थः । मनुः

यो नार्पयति निक्षेपं यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥

यः प्रार्थनेन निक्षेपं न ददाति विनैव च निक्षेपं निक्षिप्तं याचते तावुभौ चौरवच्छास्यौ तत्समं धनं वा राज्ञा दंड्यौ। इदं निर्धनमाचारविषयं। मत्स्यपुराणे तु 'द्विगुणं

दमम्' इति चतुर्थचरणे पाठः स च दमः सदननिकृष्टाचारविषय इति मिश्राः। कात्यायनः

न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम्।
अज्ञाननाशितं चैव येन दाप्यः स एव तत्॥

स एवेत्यनेन पुत्रदारादिव्यवच्छेदः।

इति विद्वद्विरचिते विवादार्णवसेतुके।
निक्षेपलक्षणाद्यैस्तु तरंगः षष्ठ ईरितः॥ ६॥

सप्तमोर्मिः॥

## अथास्वामिविक्रयः॥

तत्र बृहस्पतिः।

निक्षेपानंतरं प्रोक्तो भृगुणाऽस्वामिविक्रयः।
श्रूयतां तत्प्रयत्नेन सविशेषं ब्रवीम्यहम्॥

तत्रादौ अस्वामिविक्रयस्वरूपमाह। नारदः।

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा।
विक्रीयते ऽसमक्षं यत्तज्ज्ञेयो ऽस्वामिविक्रयः॥

तथा व्यासः

याचितान्वाहितं न्यासं हृत्वा वाऽन्यस्य यद्धनम्।
विक्रीयते स्वाम्यभावे स ज्ञेयो ऽस्वामिविक्रयः॥

स्वाम्यभावे स्वाम्यसमक्षे इत्यर्थः। तथा

अस्वामिना कृतो यस्तु दायो विक्रय एव वा।
अकृतः सतु विज्ञेयो व्यवहारे यथास्थिति॥

कात्यायनः।

अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत्।

मनुः

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसंमतः।
न तं नयेत साक्ष्यं तु स्तेनमस्तेनमानिनम्॥
अवहार्यो भवेच्चैव सान्वयः षट्शतं दमम्।
निरन्वयो ऽनपसरः प्राप्तः स्याच्चौरकिल्बिषम्॥
विक्रयाद्यो धनं किंचिद्गृह्णीयात्कुलसंनिधौ।
क्रयेण स विशुद्धस्तु न्यायतो लभते धनम्॥

अस्वामी यः स्वामिनाचा ननुमतः परकीयं द्रव्यं विक्रीणीते तं वस्तुतश्चौरमचौरमात्मानं मन्यमानं साक्षित्वं न कारयेत् न तं क्वापि प्रमाणीकुर्यादवहार्यो भवेत्। दंड्यो भवेत्सान्वयः प्रकृतधनस्वामिसंबंधी पुत्रादिः। षट्शतं पणानामिति शेषः। निरन्वयः स्वाम्यसंबंधी। अपसरणमपसरः स्वामिगृहाद्धनस्य तेन परस्वविक्रेता परसंबंधी षट्पणशतं दण्ड्यः। यदि त्वसौ विक्रेता न स्वामिनः संबंधी स्वामिगृहाच्च तस्य द्रव्यस्यापसारो न स्वामिसंबंधिनाऽन्येन कृतः किंतु स्वयमेव तद् द्रव्यापसारी तदा चौरवद्दंड्यः। अन्यकृते तु द्रव्यापसरणे स्वामिसंबंधिनि विक्रेतरि षट्पणशताधिकमपि दंड्य इति विवादरत्नाकरः। भागुरिमेधातिथिकल्पतरुविवादचिंतामणिप्रभृतिभिस्तु अपसर इत्यनेन स्वामिनः सकाशात् प्रतिग्रहादिधनोपायः अपसरः स न विद्यते यस्य स तथा इत्यर्थ इति व्याख्यातम्। एवं परस्वविक्रयी यदि स्वामिनो भ्रात्रादिरूपत्वेन सान्वयः संबंधी भवति तदा

षट्पणशतान्यवहार्यो दंडनीयः । यदि पुनः स्वामिनः संबंधी न भवति अनपसरश्च स्यात् । अपसरत्यस्मात्सकाशात् धनमित्यपसरः प्रतिग्रहक्रयादिकः स यस्य स्वामिसंबंधिपुत्रादेर्नास्ति तदा चौरसंबंधिपापं प्राप्नोति तद्वत् दंडनीय इत्यर्थ इति कुल्लूकभट्टः । विक्रयात् आपणात् । कुलसन्निधौ प्रामाणिकव्यवहर्तृमेलकसंनिधौ न्यायतः क्रयेणेत्यन्वयः । विशुद्धो निर्दोषः लभते धनं । विक्रेतुः सकाशादिति शेषः । तथा मनुः

अथ मूलमनाहार्यं प्रकाशक्रयशोधितम् ।
अदंड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥

अत्र क्रयः प्रकाशकृतः नाष्टिकश्च तत्र स्वत्वं साधयति मूलं च देशांतरगमनेनाशक्याहरणं तत्र क्रेता राज्ञा न दंड्यः । नाष्टिकाय तु धनं दाप्यः । तथा च कात्यायनः

नाष्टिकस्तत्र कुर्वीत तद्धनं ज्ञातृभिः स्वकम् ।
अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते धनम् ॥

ज्ञातृभिः साक्ष्यादिभिस्त्यक्तपदं दानविक्रयान्यस्वत्वापवादक्रियापरं । प्रकाशक्रेता अविज्ञातवासस्थानत्वादानेतुमशक्यः । बृहस्पतिः

प्रमाणहीनवादे तु पुरुषापेक्षया नृपः ।
समन्यूनाधिकत्वेन स्वयं कुर्याद्विनिर्णयम् ॥

याज्ञवल्क्यः

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
अविज्ञाताश्रयात् क्रीतं विक्रेता यत्र वा मृतः ॥

स्वामी दत्वार्धमूल्यं तु प्रगृह्णीत स्वकं धनम् ।
अर्द्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः ॥
अविज्ञातक्रयो दोषस्तथा चापरिपालनम् ।
एतद्द्वयं समाख्यातं द्रव्यहानिकरं बुधैः ॥

अविज्ञाताश्रयादविज्ञातवासस्थानात् । तेनायमर्थः । वणिग्वीथीपरिगतत्वादिना विज्ञानात् यत् परस्य वस्तुनः क्रयं यः करोति विक्रेतुरविज्ञाताश्रयत्वात्तदा नयनायनाशक्तश्च स्यात् तदा विभावितस्वामिभावात् नाष्टिकादर्द्धमूल्यं गृहीत्वा तद्द्रव्यं नाष्टिकायार्पयेत् । नाष्टिकेन न रक्षितमित्यस्य दोषः । क्रेतात्वविज्ञाताश्रयात्तद्धन क्रीतवानिति तस्य दोषः । तदेतद्दोषद्वयमुभयोरप्यर्द्धद्रव्यहानिकरमिति समुदायार्थः । षट्शतदममुपक्रम्याह मनुः ।

अनेन विधिना शास्यः कुर्वन्नस्वामिविक्रयं ।
अज्ञानाज्ज्ञानपूर्वं तु चौरवद्दंडमर्हति ॥

अज्ञातपरस्वविक्रयी षट्शतदमेन ज्ञाततद्विक्रयी चौरदण्डेन हस्तच्छेदनादिना शास्यः । यत्र तु नाष्टिको न स्वस्व साधयति तत्र प्रकाशकक्रेतुरेव तद्द्रव्यं नाष्टिकस्यैव दंडः । तथा च कात्यायनः

यदि स्वं नैव कुरुते नाष्टिको ज्ञातृभिर्धनम् ।
प्रसंगविनिवृत्त्यर्थं चौरवद्दंडमर्हति ॥

ज्ञातृभिरिति प्रायिकतया उक्तं प्रामाण्यमात्रे तात्पर्यार्थं ज्ञातिभिरिति क्वचित्पाठस्तत्रापि तथैव व्याख्येयं । नारदः

प्रकाशं क्रयतः शुद्धिः क्रेतुः स्तेयं रहः कृतात् ।

स्वामिनः क्रयोपि कश्चिद्विरुद्धो भवति। यदाह बृहस्पतिः

येन क्रीतं तु मूल्येन प्रागध्यक्षनिवेदितम्।
न तत्र विद्यते दोषः स्तेनः स्यादुपधिक्रये॥

उपधिक्रयमाह स एव।

अंतर्गृहे बहिर्ग्रामात् निश्युपांश्वसतो जनात्।
हीनमूल्यं तु यत्क्रीतं ज्ञेयोऽसावुपधिक्रयः॥

असतो जनादसाधुत्वेन ज्ञानात्। अत्रापि अस्वामिविक्रयवद्व्यवहारः। तथा च नारदविष्णू

अस्वाम्यनुमताद्दासादसतश्च जनाद्रहः।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत्॥

यद्यप्रकाशं हीनमूल्यं उपांशु क्रीणीयात्तदा क्रेता चौरवच्छास्यः। तद्दोषभाक् अस्वामिविक्रेतृसमदोषभाक् याज्ञवल्क्यः।

स्वं लभेताऽन्यविक्रीतं क्रेतुर्दोषो ऽप्रकाशितः।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः॥

आत्मीयद्रव्यं संमतिव्यतिरेकेणान्यविक्रीतं सर्वं प्राप्नुयात् क्रेतुरप्रकाशे क्रयदोषो भवेत्। हीनान्नीचात्। असंभावितद्रव्यस्वामिभावात्। वेलाहीने क्रयार्हवेलाहीने तेन हीनाद्रहो हीनमूल्येन वेलामनाश्रित्य क्रयं कुर्वन् तस्करो भवतीति वाक्यार्थः। कात्यायनः

अनुपस्थापयन्मूलं क्रयं चापरिशोधयन्।
यथाभियोगं धनिने धनं दाप्यो दमं च सः॥

नारदः

न गूहेदागमं क्रेता शुद्धिरस्य तदागमात्।
विपर्यये तुल्यदोषः सर्वं तद्दंडमर्हति॥

विपर्यये आगमगूहने तुल्यदोषो विक्रेतृतुल्यदोषः। तद्दंडं विक्रेतृतुल्यदंडमर्हति। यदा यस्य हस्ते द्रव्यं तमपरो वदति मदीयं देहीति साधुश्चासौ तदा तेन किं कार्यमित्यत्राह बृहस्पतिः।

पूर्वस्वामी तु तद्द्रव्यं यदागत्य विभावयेत्।
तत्र मूलं दर्शनीयं क्रेतुः शुद्धिस्ततो भवेत्॥

मूलमत्र विक्रेता। कात्यायनः

प्रकाशं वा क्रयं कुर्यात् मूलं वापि समर्पयेत्।
मूलानयनकालस्तु देयो योजनसंख्यया॥
यदा मूलमुपन्यस्य पुनर्वादी वदेत्क्रयम्।
आहरेन्मूलमेवासौ न क्रयेण प्रयोजनम्॥

क्रयशुद्धिरपि तत एव भविष्यतीति मूलाभाव एव क्रयशुद्धिरन्वेषणीयेति तात्पर्यं प्रकाशं क्रयं प्रकाशयेत्। न क्रयेण न क्रयख्यापनेन प्रयोजनं अपराधव्यावर्तनमित्यर्थः। मूले आनीते व्यासः

मूले समाहिते क्रेता नाभियोज्यः कथं चन।
मूलेन सह वादस्तु नाष्टिकस्य तदा भवेत्॥

नाष्टिको नष्टधनस्वामी। बृहस्पतिः।

विक्रेता दर्शितो यत्र हीयते व्यवहारतः।
क्रेतृराज्ञोर्मूल्यदमौ प्रदद्यात्स्वामिने धनम्॥

याज्ञवल्क्यः

हृतं प्रणष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दंड्यः स तु षण्णवतिं पणान् ॥
हृतं प्रणष्टं वा चौरादिहस्तान्मदीयमिति नृपस्यानिवेद्यैव यो गृह्णाति स राजग्राह्यकरदंडेन दंड्यः ॥
इति विद्वद्विरचिते विवादार्णवसेतुके ।
अस्वामिविक्रयाख्यस्तु तरंगः सप्तमो गतः ॥ ७॥

अष्टमोर्मिः ।

॥ अथ संभूयसमुत्थानम् ॥

तत्रादौ तत्स्वरूपमाह नारदः ।
वणिक्प्रभृतयो यत्र कर्म संभूय कुर्वते ।
तत्संभूयसमुत्थानं व्यवहारपदं स्मृतम् ॥
संभूय धनमेलकं कृत्वा । तत्राधिकारिणमाह बृहस्पतिः
कुलीनदक्षानलसैः प्राज्ञैर्लाभादिवेदिभिः ।
आयव्ययज्ञैः शुचिभिः शूरैः कार्या सह क्रिया ॥
बृहस्पतिः ।
समोतिरिक्तो हीनो वा यत्रांशो यस्य यादृशः ।
क्षयव्ययौ तथा वृद्धिस्तस्य तत्र तथाविधा ॥
याज्ञवल्क्यः ।
समवायेन वणिजां लाभार्थं कर्मकुर्वताम् ।
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥
समवायेन मेलकेन । कर्म वाणिज्यादि । लाभालाभौ लाभापचयौ । यथाद्रव्यं द्रव्यानुसारेण । यथा वा संविदा समयेन द्रव्यव्यवस्थायां मूलधनानुसारेण वृद्धिक्षयौ व्यवस्थायां तु द्रव्यवस्थानुसारेणैव ताविस्यर्थः । पर-

रपरमवंचयद्भिः प्रवर्तितव्यमित्याह व्यासः

समक्षमसमक्षं वाऽवंचयंतः परस्परम्।
नानापण्यानुसारेण प्रकुर्युः क्रयविक्रयौ॥

बृहस्पतिः।

यः कश्चिद्वंचकस्तेषां विज्ञातः क्रयविक्रये।
शपथैः स विशोध्यः स्यात्सर्ववादेष्वयं विधिः॥
क्षयो हानिर्यदा तत्र देवराजकृताद्भवेत्।
सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः॥

शपथैरिति प्रमाणमात्रोपलक्षणं मानांतरस्यापि संभवात्। क्षयो मूलस्य हानिर्लाभस्य। अस्यापवादमाह स एव।

अनिर्दिष्टो वार्यमाणः प्रमादाद्यस्तु नाशयेत्।
तेनैव तद्भवेद्देयं सर्वेषां समवायिनाम्॥

अनिर्दिष्टोऽननुज्ञातः। याज्ञवल्क्यः।

प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम्।
स तद्दद्याद्विप्लवाच्च रक्षिता दशमांशभाक्॥

विप्लवात्तस्कराद्युपद्रवात्। बृहस्पतिः।

दैवराजभयाद्यस्तु स्वशक्त्या परिपालयेत्।
तस्यांशं दशमं दत्वा गृह्णीयुस्तेंऽशतो ऽपरम्॥

नारदः।

दैवतस्कर राजाग्निव्यसने समुपस्थिते।
स्वशक्त्यारक्षयेद्यस्तु तस्यांशो दशमः स्मृतः॥

कात्यायनः।

चौरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत्।
तस्यांशो दशमो देयः सर्वद्रव्येष्वयं विधिः॥

समाहरेत् रक्षेत्। एकस्वामिकेष्वपीयं व्यवस्थेति केचित्। तन्न संभूयसमुत्थानप्रकरणास्याम्नानात्। नारदेन सहैकार्थतां मन्यमानाभ्यां कामधेनुहलायुधाभ्यमलिखनाच्च। एवमेव चंडेश्वरवाचस्पतिमिश्रादयः। याज्ञवल्क्यः।

जिह्मं त्यजेयुनिर्लाभमशक्तो ऽन्येन कारयेत्।

जिह्मं वंचकं निर्लाभं मूलमात्रं दत्वा निःसारयेयुः अजिह्म एव यो द्रव्यरक्षणे इतरव्यापारे चाशक्तः स इतरं पुरुषं शक्तं नियुंजीतेत्यर्थः। रक्षणशक्तस्यैकस्य मरणे त्वाह नारदः।

एकस्य चेत्स्याद्व्यसनं दायादोऽस्य तदाप्नुयात्।
अन्यो वाऽसति दायादे शक्तश्चेत् सर्व एव वा॥

शक्तस्य मरणे तद्दायादो भांडमवेक्ष्य तद्दशमांशं तदभावे अन्यस्तद्रक्षिता तदभावे सर्वे वणिजो भांडं रक्षयित्वा संभूय दशममशं गृह्णीयुरित्यर्थः। कृत्स्नभांडस्वामिमरणे त्वाह। नारदः।

कश्चिच्च संसरन् देशान्प्रेयादभ्यागतो वणिक्।
राजास्य भांडं तद्रक्षेद्यावद्दायाददर्शनम्॥

बृहस्पतिः।

यदा तत्र वणिक्कश्चित् प्रमीयेत प्रमादतः।
तस्य भांडं दर्शनीयं नियुक्तै राजपूरुषैः॥

राज्ञे इति शेषः । तथा

यदा कश्चित् समागच्छेत्तत्र ऋक्थहरो नरः ।
स्वाम्यं विभावयेदन्यैः स तदा लब्धुमर्हति ॥

नारदः ।

दायादे ऽसति बंधुभ्यो ज्ञातिभ्यो ऽथ तदर्पयेत् ।
तदभावे तु गुप्तं तद्रक्षयेद्दशवत्सरान् ॥

अत्र हलायुधस्तु वाक्यांतर परामर्शात् ज्ञात्यभावे मातुलादीनामधिकार इत्याह बंधुज्ञाती च संनिहितसंबंधिनौ दायादातिरिक्तौ इति रत्नाकरः । बृहस्पतिः ।

राजाददीत षड्भागं नवमं द्वादशं तथा ।
शूद्रविट्क्षत्रजातीनां विप्राद् गृह्णीत विंशकम् ॥
त्र्यब्दादूर्ध्वं तु नागच्छेद्यत्र स्वामी कथंचन ।
तदा गृह्णीत तद्राजा ब्रह्मस्वं ब्राह्मणं श्रयेत् ॥

ब्राह्मणं श्रयेदन्यब्राह्मणेभ्यो ऽर्पयेदित्यर्थः । बौधायनः अब्राह्मणस्य प्रणष्टस्वामिकमृक्थं संवत्सरं परिपाल्य राजा हरेत् । कालविकल्पस्तु दूरदूरतरदूरतमदेशागमनापेक्षया बोध्यः । नारदः ।

अस्वामिकमदायादं दशवर्षस्थितं ततः ।
राजा तदात्मसात् कुर्यादेवं धर्मो न हीयते ॥
ऋत्विजां व्यसने चैवमन्यस्तत्कर्म निस्तरेत् ।
लभेत दक्षिणाभागं स तस्मात्संप्रकल्पितम् ॥

अस्वामिकं प्रमीतस्वामिकं । अदायादं दायादादिऋक्थहरशून्यं अत्र दशवर्षप्रतीक्षणं अत्यंताचिरतमेनाग-

मनसंभावनायां बोद्धव्यं । व्यसने ऽसामर्थ्ये । सामान्येनाह । बृहस्पतिः ।

एवं क्रियाप्रवृत्तानां यदि कश्चिद्विपद्यते ।
तद्बंधुना क्रिया कार्या सर्वैर्वा सहकारिभिः ॥

क्रिया आर्त्विज्यादिका । याज्ञवल्क्यः

जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत् ।
अनेन विधिराख्यात ऋत्विक्कर्षककर्मिणाम् ॥

अनेन संभूय समुत्थानमार्गेण इत्यर्थः । बृहस्पतिः ।

प्रयोगं कुर्वते ये तु हेमधान्यरसादिना ।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः ॥
बहूनां संमतो यस्तु दद्यादेको धनं नरः ।
करणं कारयेद्वापि सर्वैरेव कृतं भवेत् ॥

प्रयोगं लाभार्थं करणं लेख्यादि । पुनः स एव ।

ज्ञातिसंबंधिसुहृदामृणं देयं सबंधकम् ।
अन्येषां लग्नकोपेतं लेख्यसाक्षियुतं तथा ॥
स्वेच्छादेयं हिरण्यर्णं रसधान्यं तु सावधि ।
देशस्थित्या प्रदातव्यं गृहीतव्यं तथैव तत् ॥

हिरण्यदाने ऽवधौ स्वेच्छा । रसादौ अवधेरावश्यकत्वम्

समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत् ।
न याचते च यः कश्चिल्लाभात्सपरिहीयते ॥
प्रयोगः पूर्वमाख्यातः समासेनोदितो ऽधुना ।
श्रूयतां कर्षकादीनां विधानमिदमुच्यते ॥
वाहैः कर्षकबीजाद्यैः क्षेत्रोपकरणेन च ।

ये समानास्तु तैः सार्धं कृषिः कार्या विजानता ॥
बाह्यबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते ।
तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनाम् ॥
एष धर्मः समख्यातः कीनाशानां पुरातनः ॥
क्षेत्रहानिर्यस्य विसामग्र्या यत् क्षेत्रं पतितं तत्क्षति-स्तेनैव सोढव्या । कीनाशानां कृषीवलानां । तथा ।
हिरण्यकूप्यसूत्राणां काष्ठपाषाणचर्मणाम् ।
संस्कर्ता तु कलाभिज्ञः शिल्पी चोक्तो मनीषिभिः ॥
हेमकारादयो यत्र शिल्पं संभूय कुर्वते ।
कर्मानुरूपं निर्वेशं लभेरंस्ते यथांशतः ॥
निर्वेशं वेतनं । अत्रैव विशेषमाह कात्यायनः ।
शिक्षकाभिज्ञकुशला आचार्यश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम् ॥
अत्र शिक्षकाभिज्ञकुशलाचार्याश्चत्वारो घटनज्ञानो-त्कर्षेण भ्रियंते । बृहस्पतिः ।
धर्म्यं देवगृहं वापि धार्मिकोपस्कराणि च ।
संभूयकुर्वतां चैषां प्रमुख्यो द्व्यंशमर्हति ॥
नर्तकानामेष धर्मो धर्मविद्भिरुदाहृतः ।
तालज्ञो लभते ऽध्यर्धं गायनास्तु समांशिनः ॥
प्रमुख्यः प्रधानभूतः अर्धमधिकं यत्र तदध्यर्धं तेन सार्द्धमंशं तालज्ञो लभते इत्यर्थः । बृहस्पतिः ।
स्वाम्याज्ञया तु यच्चौरैः परदेशात्समाहृतम् ।
राज्ञे दत्वा तु षड्भागं लभंते ते यथांशतः ॥

चतुरोंशांस्तथा मुख्यः शूरस्त्र्यंशमवाप्नुयात् ।
समर्थस्तु हरेद्ध्यंशं शेषास्त्वन्ये समांशिनः ॥

मुख्यो बुद्धिशरीरव्यापारवान् । शूरः साहसिकः । समर्थोऽतिबल इति मिश्राः प्राहुः । अन्यापेक्षया व्यापारवान् इति रत्नाकरः । कात्यायनः ।

पराष्ट्राद्धनं यत्स्यात् चौरैः स्वाम्याज्ञया हृतम् ।
राज्ञो दशांशमुद्धृत्य विभजेरन्यथाविधि ॥
चौराणां मुख्यभूतस्तु चतुरोंशांस्ततो हरेत् ।
शूरोंशांस्त्रीन्समर्थो द्वौ शेषास्त्वेकैकमेव च ॥
तेषां चेत्प्रसृतानां यो ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं तस्य कार्या समा क्रिया ॥

षड्भागदशमांशौ राज्ञो रक्षणादिव्यापारतदभावाभ्यां व्यवस्थाप्यौ। प्रसृतानां चोरयितुमितरततो गतानां मध्ये यो ग्रहणं अवरोधनं प्राप्तः सन्धनं दत्वा आत्मानं मोक्षयति तद्धनं सर्वैरेव चौरैर्विभज्य शोधनीयमित्यर्थः कात्यायनः ।

वणिजां कर्षकाणां च चौराणां शिल्पिनां तथा ।
अनियम्यांशकर्तॄणां सर्वेषामेव निर्णयः ॥
अनियम्यांशकर्तॄणां अंशमनियम्य कृतिमताम् ॥

इति विद्वद्भिरचिते विवादार्णवसेतुके ।
वाणिज्येऽशप्रभेदेन तरंगोऽष्टम ईरितः ॥ ८ ॥ ५ ॥

## नवमोर्मिः

### ॥ अथ दत्ताप्रदानिकम् ॥

तत्र बृहस्पतिः।

एषाखिलेनाभिहिता संभूयोत्थाननिष्कृतिः।
अदेयदेयदत्तानामदत्तस्य च कथ्यते ॥

तत्स्वरूपमाह नारदः।

दत्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति।
दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम् ॥ १ ॥
अदेयमथ देयं च दत्तं चादत्तमेव च।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥ २ ॥
तत्र ह्यष्टावदेयानि देयमेकविधं स्मृतम्।
दत्तं सप्तविधं विद्याददत्तं षोडशात्मकम् ॥ ३ ॥

असम्यक्त्वं तु दानस्यादेयद्रव्यदानाद्वा अयथादानाद्वा संप्रदानभ्रांत्यादिना वा पित्राद्यसम्पत्या वा दातुरेवातिवृद्धाद्यवस्थाभेदाद्वा। तत्रादेयान्याह बृहस्पतिः

सामान्यपुत्रदाराधिसर्वस्वं न्यासयाचितम्।
प्रतिश्रुतं तथान्यस्य न देयं त्वष्टधा स्मृतम् ॥

सामान्यमनेकस्वामिकं याचितं व्यापारार्थं याचित्वा आनीतम् अत्र सामान्ये न्यायात् पुत्रदारयोर्विमतयोर्वचनबलात् सर्वस्वे सान्वयस्य प्रतिश्रुते च सर्वस्यैव वचनबलादेव आधिन्यासयाचितेषु स्वत्वाभावात् पुत्रदारसर्वस्वप्रतिश्रुतेषु चतुर्ष्वपि स्वातंत्र्ये सत्यपि वचनबलादेव दानबाध इति मिश्राः। साधारणोपि स्वांशयोग्ये दानं

सिध्यत्येव किंतु दातुः प्रत्यवायो निषिद्धाचरणादिति स्मार्तभट्टाचार्यजीमूतवाहनादयः प्राहुः। अन्वये सत्यपि सर्वस्वदानं सिध्यत्येव स्वतंत्रस्वामिकृतत्वात्। किंतु दातुः प्रत्यवायो निषिद्धाचरणादितिस्मृतिसारादयः प्राहुः। नारदः।

अन्वाहितं याचितकमाधिः साधारणं च यत्।
निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति॥
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम्॥

आपत्कालेपि पुत्रदारावन्वयानां विमतौ पुत्रदारसर्वस्वानामदेयतेत्यर्थः। एवमेव विवादचिंतामणिविवादरत्नाकरादयः। तत्संमतौ तु देयतामाह। कात्यायनः

विक्रयं चैव दानं च न नार्याः स्युरनिच्छवः।
दाराः पुत्राश्च सर्वस्वमात्मन्येव तु योजयेत्॥
आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा।
अन्यथा न प्रवर्तेत इति शास्त्रविनिश्चयः॥

पुत्रदारान्वयानां विमतौ पुत्रादित्रयं स्वयमेवोपभोक्तव्यं तेषामनुमतौ तु तेषां दानमित्यर्थः। केचित्तु सर्वस्वमन्वयानुमतावपि न देयं प्रागुक्तनारदवचनेन

अन्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम्।

इति याज्ञवल्क्य वचनेन

अहितं चैव निक्षेपः सर्वस्वं चान्वये सति

इति दक्षवचनेन च तत् सत्त्वमात्र एव दाननिषेधा-

दित्याहुः। वसिष्ठवचनमप्यनुमतिपरं । यथा । शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य दानविक्रयपरित्यागेषु मातापितरौ प्रभवतः । अत्राप्येकस्मिन्पुत्रे विशेषयति स एव । नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषां न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः । एकः पुत्रः स्वदानेऽनुमतोपि न देयः स हीत्यादिहेतुमन्निगदस्वरसात् दद्यात् इत्यनेनाजहत्स्वार्थलक्षणया विक्रयादिकमपि विवक्षितं भर्त्रनुज्ञायास्तत्रापि प्रयोजकत्वादिति रत्नाकरः। अधिकं पुनरनुपदं वक्ष्यामः । देयमाह बृहस्पतिः

कुटुंबभक्तवसनाद्देयं यदतिरिच्यते ।
मध्वास्वादो विषं पश्चाद्दातुर्धर्मो ऽन्यथा भवेत् ॥

कात्यायनः

सर्वस्वं गृहवर्जं तु कुटुंबभरणाधिकम् ।
यद्द्रव्यं तत्स्वयं देयमदेयं स्यात्ततो ऽन्यथा ॥

स्वकीयमपि यदतिरिच्यते तद्देयं अनतिरिक्तदाने पापं अतिरिक्तेपि पुण्यं अत्र दातुर्धर्मोऽन्यथा भवेदिति विहिताकरणाद्धर्मसिद्धिरेव न भवतीति न किंतु प्रतिषिद्धाचरणादधर्मोऽपि दानसिद्धिस्तु स्वीये भवत्येव दृष्टस्य स्वत्वस्य कृतकारणस्य सत्त्वात् । तेन तन्नाच्छेत्तुं शक्यत इति अस्वीय एव दानानिष्पत्तिः । एवं स्थावरेपीति स्मृतिसारवाचस्पतिमिश्रादयः । सम्मत्यपेक्षया तु मध्यग एव नामध्यगे तथा च बृहस्पतिः ।

सप्तागमाद्गृहक्षेत्रात्ययत् क्षेत्रं प्रदीयते ।
पित्र्यं वाथ स्वयं प्राप्तं तद्दातव्यं विवक्षितम् ॥
स्वेच्छादेयं स्वयं प्राप्तं वद्धाचारेण बंधकम् ।
वैवाहिके क्रमायाते सर्वदानं न विद्यते ॥

सप्तागमः सप्तविध आगमः । स च

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥

इति मनूक्तः । अत्र दायो ऽन्वयागतं द्रव्यं लाभो निध्यादेः जयः संग्रामे प्रयोगः कुसीदं कर्मयोगः कृषि वाणिज्यादिः उपलक्षणं चैतत्कथमपि स्वीकृतमसाधारणस्वमत्रेच्छया । अन्यसाधारणं तु तदनुमतं तद्देयमिति । वैवाहिक इत्यत्र वैवाहिकपदेन शौर्यार्जितमपि विवक्षितं । सर्वदानं अनुमत्या अननुमत्या च यद्दानं तत्सर्वं न विद्यते । क्रमायातं स्थावरमप्यविभक्तं । तदुक्तं

सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत् ।
स्त्रीज्ञातिस्वाम्यनुमतं दत्तं सिद्धिमवाप्नुयात् ॥

सौदायिकं कन्याभोग्यतया विवाहे यल्लब्धं तत्रैव पत्यादीयमाने पत्न्यनुमत्यपेक्षा न्यायसहत्वात् नतु स्वभोग्यतयापि प्राप्ते परिवानीये स्मृतेरदृष्टार्थत्वापत्तेः । क्रमायातेप्यविभक्ते स्थावरे जंगमे वा स्वाम्यंतरापेक्षयैव दानं । एवं शौर्यप्राप्ते रणजिते शत्रोर्वाहनादौ स्वस्वाम्यनुमत्यपेक्षा तस्येन स्वामित्वाभिधानात् । न तु यस्मादायपि तस्य जेतृपुरुषगामित्वाभिधानात् । भगिना राज्ञा

स्वपुरुषेषु समर्पिते ऽस्वादी राजांतरसेनया जिते जेत्रा च दीयमाने भंगिराजसम्मत्यपेक्षेत्यर्थ इत्यन्ये। बद्धाचारेणेति बंधकं यथा स्वसंबंधि तथा परस्यापि कार्यं तेनायमर्थः। इदं वस्तु मयि बंधकमस्ति मया त्वयि निधीयते त्वयापि बंधकांतरं गृहीत्वा एतत्स्वामिनि देयमित्यर्थः। एवं

विभक्ता अविभक्ता वा दायादाः स्थावरे समाः।
एको ह्यनीशः सर्वत्र दानाधमनाविक्रये॥

इति विभक्तानामपि यत्रांशपरिच्छेदो न जातस्तन्मध्यगमेव तिष्ठति। तेन तत्र साधारणत्वमेव तत्रैकोनीशः पृथग्भूतेषु सर्वेष्वेव द्रव्येषु स्वतंत्रकृतस्य सिद्धिरेव इति मिश्राः। विशेषस्तु दायप्रकरणे उक्तः। अत्र दायमादत्त इति दायादः पुत्रादिरिति कल्पतरुप्रकाशकारादयः। अन्येतु दायादपदं पुत्र एव मुख्यमिति पितुरुपस्थितौ विभक्तस्यापि पुत्रस्य विद्यमाने पितरि स्थावरे ऽनीशत्वं तेन प्रतिग्रहादिसमागमलब्धमेव देयमित्यर्थः। स्वतंत्रस्वामिदत्तं तु नाच्छेद्यं। अत्रैव हारीतः।

प्रतिश्रुतार्थादानेन दत्तस्य छेदनेन च।
विविधान्नरकान् याति तिर्यग्योनौ च जायते॥
वाचा यत्र प्रतिज्ञातं कर्मणा नोपपादितम्।
ऋणं तद्धर्मसंयुक्तमिह लोके परत्र च॥

क्वचित्प्रतिश्रुत्यापि न देयमित्याह गौतमः। प्रतिश्रुत्याप्यधर्मयुक्ताय न दद्यात्। अत्राधर्मो दानानर्हत्वप्रयोजको

ऽभिमतः। कात्यायनः

खेच्छया यत्प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम्।
न दद्याद्दणवद्दाप्यः प्राप्नुयात्पूर्वसाहसम्॥

तथा मत्स्यपुराणं।

प्रतिश्रुताप्रदातारं सुवर्णं दंडयेन्नृपः॥

इति

अथ दत्तम् तत्र बृहस्पतिः।

भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे।
श्रद्धानुग्रहसम्प्रीत्या दत्तमष्टविधं स्मृतम्॥

भृतिर्वेतनं तुष्ट्या बंदिचारणादिभ्यो दत्तं। पण्यमूल्यं विक्रेतरि दत्तं। स्त्रीशुल्कं कन्यापरिणयनार्थं तत्संबंधिनि दत्तं। उपकारिणे उपकारवते प्रत्युपकारतया दत्तं श्रद्धया सत्पात्रेभ्यो दत्तं। अनुग्रहेण पुत्रादिभ्यो दत्तं। संप्रीत्या मित्रादिभ्यो दत्तं। यत्तु

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः।
स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः॥

इति नारदेन दत्तस्य सप्तविधत्वमुक्तं तत्प्रीतिदत्तस्यानुग्रहदत्तांतर्भावादविरुद्धं। एवमेव वाचस्पतिमिश्राः दक्षः।

मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि।
दीनानाथविशिष्टेभ्यो दत्तं तु सफलं भवेत्॥

॥ अथादत्तम्॥ तत्र नारदः।

अदत्तं तु भयक्रोधकामशोकरुगन्वितैः।

तथोत्कोचपरीहासव्यत्यासच्छलयोगतः॥
बालमूढास्वतंत्रार्तमत्तोन्मत्तापवर्जितैः।
कर्ता ममायं कर्मेति प्रतिलाभेच्छया च यत्॥

अत्र भयादिरुगन्वितांताः पंचप्रकृतिस्थताविरोधिनो दृष्टव्याः। उत्कोचः कात्यायनेन वक्ष्यते। परीहास उपहासो दानाभिसंधिमंतरेण दानबोधकवचनमितियावत्। व्यत्यासो अन्यस्मै दातव्यस्यान्यस्मै दानं अन्यस्मिन् दातव्ये ऽन्यस्य वा यद्दानं। छलं प्रमाद इति वाचस्पतिमिश्रप्रकाशकारादयः। बहु परिभाष्य स्वल्पदानं तदिति रत्नाकरः तच्चिंत्यं। बालो ऽत्र कार्याकार्यनिर्णयाक्षमवयोयोगी। एवमेव चंडेश्वरः। कृत्याकृत्याविवेचकः मूढो जड इति मिश्राः। स्वभावादेव कार्याकार्यविवेचनाशून्य इति रत्नाकरः। अस्वतंत्रः अपुत्रदासादिः आर्तो रोगाभिभूत इति। रुगन्वितश्चासाध्यरोगवानिति विवृतं मिताक्षरायाम्। मत्तो मदिरादिना। उन्मत्तो वातेन। अपवर्जितो बंधुबहिष्कृतः। मिताक्षराकारहलायुधौ तु अपवर्जितमिति पठित्वा अपवर्जितं दत्तमित्याहतुः। प्रतिलाभेच्छया सोपाधिदत्तं। उपाध्यासिद्धौ कात्यायनः।

कामक्रोधास्वतंत्रार्तक्लीबोन्मत्तप्रमोहितैः।
व्यत्यासपरिहासाभ्यां यद्दत्तं तत्पुनर्हरेत्॥
यदि कार्यप्रसिद्ध्यर्थमुत्कोचास्यात्प्रतिश्रुता।
तस्मिन्नर्थे प्रसिद्धे तु न देया स्यात्कथं चन॥

अथ प्रागेव दत्ता स्यात्प्रतिदाप्यः सता बलात् ।
दत्तं चैकादशगुणमाहुर्गार्गीयगालवाः ॥

अत्रार्तेन दत्तं धर्मकारणमन्तरेण दत्तमिति बोद्धव्यम् । तथाच कात्यायनः ।

सुस्थेनार्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥

अधुना यदुत्कोचामाश्रित्य दत्तमदत्तमित्युक्तं तामाह कात्यायनः ।

स्तेयसाहसिकोद्वृत्तपारदारिकशंसनात् ।
दर्शनाद्वृत्तनष्टस्य तथाऽसत्यप्रवर्तनात् ॥
प्राप्तमेतैस्तु यत्किंचित्तदुत्कोचाख्यमुच्यते ।
न दाता तत्र दंड्यः स्यात्मध्यस्थस्तत्र दोषभाक् ॥

स्तेयं च साहसं च स्तेयसाहसे ते यस्य स्तः स स्तेय साहसिकः । वृत्तनष्टो वृत्तच्युतः तेन स्तेनानुसंधात्रा स्तेनादिदर्शनार्थं यद्धनं दर्शयित्रे दत्तं यच्च साक्ष्यादीनसत्याभिधाने प्रवर्तयित्रे दत्तं तदुत्कोचाख्यं कर्मसिद्धावपि निवर्त्यं मध्यस्थो यदुत्कोचां गृह्णातीत्यर्थः । बृहस्पतिः

क्रुद्धकुष्टप्रमत्तार्तबालोन्मत्तभयातुरैः ।
मत्तातिवृद्धनिर्धूतैः प्रमूढैः शोकिरोगिभिः ॥
नर्मदत्तं तथैतैर्यददत्तं तत् प्रकीर्तितम् ।

तेन धर्मार्यथं यद्दत्तं तत् प्रमाणमेवेत्यर्थः । अतिवृद्धो गलितेन्द्रियः । निर्धूतो ऽपवर्जितः । नर्मदत्तं क्रीडादत्तं । यथा बृहस्पतिः ।

प्रतिलाभेच्छया दत्तमपात्रे पात्रशंकया ।
कार्ये चाधर्मसंयुक्ते स्वामी तत्पुनराप्नुयात् ॥

एवमन्यत्रापि । मिश्रास्तु यद्रूपेण यद्दानं तद्रूपश्चासौ न भवति । तदाच्छिद्य गृह्णीयादित्याह मनुः ।

धर्मार्थं येन यद्दत्तं कस्मैचिद्याचते धनम् ।
पश्चाच्च न तथा तत्स्यात् न देयं तेन तद्भवेत् ॥
यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ।
राज्ञो दाप्यः सुवर्णं स्यात्तस्य दोषस्य निष्कृतिः ॥

यदि संसाधयेदिति त्वया मे यद्दत्तं तन्मया त्वयि न देयमिति यावत्स्वीकृतं तद्देहीति वा यदि वदतीत्यर्थ इत्याहुः । रत्नाकरस्तु धर्मार्थमित्यादेः धर्मार्थं याचित्वा गृहीतेन यदि धर्मं न करोति तदा तस्य तदाहरणीयम् । यदि तु स दर्पाल्लोभाद्वा तमर्थं साधयेत् तदा राज्ञा सुवर्णं दंडनीय इत्यर्थ इत्याह नारदः ।

गृह्णात्यदत्तं यो मोहात् पश्चाद्देयं प्रतीच्छति ।
दंडनीयावुभावेतौ धर्मज्ञेन महीभृता ॥
इति विद्वद्भिरचिते विवादार्णवसेतुके ।
दत्ताप्रदानिकाख्यैस्तु तरंगो नवमो गतः ॥ ९ ॥

---

दशमोर्मिः ।

## अथ भृतकविधिः ।

तत्र बृहस्पतिः ।

अदेयादिकमाख्यातं भृत्यानामुच्यते विधिः ।

शुश्रूषामभ्युपेत्य शुश्रुषोरेतत्पदं विवादपदमित्यर्थः

तथा स एव।

वेतनस्यानपाकर्म तदर्थं स्वामिपालयोः।
क्रमशः कथ्यते वादो भृतं भेदत्रयं त्विदम्॥

भृत्यो मूल्येन तत्कर्मकरः कः शुश्रूषुकः। कतिविधा वा ते इत्याकांक्षायामाह नारदः।

शुश्रूषकः पंचविधः शास्त्रे दृष्टो मनीषिभिः।
चतुर्विधाः कर्मकराः शेषा दासास्तु पंचकाः॥

चतुर्विधाः कर्मकरा दासेन सह पंच शुश्रूषका भवंति त्रिपंचकाः पंचदशात्मानः। भृत्या इत्यनुवृत्तौ बृहस्पतिः

अनेकधा ते ऽभिहिता जातिकर्मानुरूपतः।
विद्याविज्ञानकामार्थनिमित्तेन चतुर्विधाः॥

नारदः।

शिष्यांतेवासिभृतकाश्चतुर्थस्त्वधिधर्मकृत्।
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः॥
सामान्यमस्वतंत्रत्वमेषामाहुर्मनीषिणः॥

बृहस्पतिः।

विद्या त्रयी समाख्याता ऋग्यजुः सामलक्षणा।
तदर्थं गुरुशुश्रूषां प्रकुर्याच्छास्त्रदेशिताम्॥

नारदः।

आ विद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम्
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च॥

तथा

समावृत्तश्च गुरवे प्रदाय गुरुदक्षिणाम्।

प्रतीयात्स्वगृहानेषा शिष्यवृत्तिरुदाहृता ॥

अनेन शिष्यभृतक उक्तः। द्वितीयविधायां बृहस्पतिः

विज्ञानमुच्यते शिष्यं हेमकुप्यादिसंस्कृतिः।
नृत्यादिकं च तच्छिक्षन् कुर्यात्कर्म गुरोर्गृहे ॥

विज्ञानार्थिन एव नारदेनंतेवासित्वमुक्तं। यथा नारदः

स्वशिल्पमिच्छन्नाहर्तुं बांधवानामनुज्ञया।
आचार्यस्य वसेदंते कालं कृत्वा सुनिश्चितम् ॥
आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम्।
नचान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ॥

स्वमात्मजात्युचितं आहर्तुं आदातुं अंते पार्श्वे कालमवधिभूतं सुनिश्चितं साक्षिमत् अन्यत् शिल्पशिक्षातः आभ्यामंतेवासी भृतक उक्तः। तथा नारदः

शिक्षयंतमदुष्टं च यस्त्वाचार्यं परित्यजेत्।
बलाद्वासयितव्यः स्याद्वधबंधौ च सोऽर्हति ॥
शिक्षितोऽपि कृतं कालमंतेवासी समापयेत्।
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥

वधोऽत्र ताडनमात्रं बंधो बंधनं। यंत्रिणमिति कश्चित्। कृतं कालं एतावत्कालं यावन्मया भवदीयमेतत्कर्तव्यमिति नियमितं पूर्णेऽध्ययने तत् पालयेदंतेवासीत्यर्थः। तत्फलं भृत्यादिकं। तथा।

गृहीतशिल्पः समये कृत्वाचार्यप्रदक्षिणम्।
शक्तितश्चानुमान्यैनमंतेवासी निवर्तते॥

कामनिमित्तेनोक्तं भृतकं तृतीयं बृहस्पतिः परिभाषते।

यो भुंक्ते परिदासीं तु स ज्ञेयो वडवाभृतः।
कर्म तत्स्वामिनः कुर्याद्यथार्थं भृतको नरः॥

स एवार्थभृतकमाह।

बहुधार्थभृतः प्रोक्तस्तथा भोगभृतो ऽपरः।
कर्म कुर्यात्प्रतिज्ञातं लभेत परिभाषितम्।
द्विप्रकारो भोगभृतः कृषिगोजीविनां स्मृतः।
जातसस्यात्तथा क्षीरात् स लभेत न संशयः॥

लभेतेत्यस्य भोगमिति शेषः। रत्नाकरमते भागमिति शेषः।भोगभृतस्याप्यर्थभृतविशेषत्वाच्चतुर्थं। भोगभृत इत्यत्र भागभृतइति रत्नाकरकृता पठितं।भागभृतो ऽत्र कर्मफलानां अंशभृत इति व्याख्यातं च।नारदेनैषां भृतकपदेन तृतीयप्रकारत्वमुक्तं तेषां प्रकारांतरमप्याह स एव।

भृतकस्त्रिविधो ज्ञेय उत्तमाधममध्यमः।
शक्तिभक्त्यनुरूपत्वोदषां कर्माश्रया भृतिः॥
उत्तमश्चायुधीयो ऽत्र मध्यमश्च कृषीवलः।
अधमो भारवाहः स्यादित्येष त्रिविधो भृतः॥

अधिकर्मकृतमाह नारदः।

अर्थेष्वधिकृतो यः स्यात्कुटुंबस्य तथोपरि।
सो ऽधिकर्मकरो ज्ञेयः स च कौटुंबिकः स्मृतः॥

भक्तिरुपचारः कर्माश्रया कार्यनिबंधना। अर्थेषु कार्येषु अनयोर्द्वयोरप्यधिकर्मकरकौटुम्बिकसंज्ञे व्यवहाराय। बृहस्पतिनाप्यस्यार्थभृत एवांतर्भावः कृतः। नारदेन तु सामान्यविशेषभावेन भेदेन गणनं कृतं एषां मध्ये

किं कस्य कर्मेत्यत्राह बृहस्पतिः ।

शुभकर्मकरा ह्येते चत्वारः समुदाहृताः ।
जघन्यकर्मभाजस्तु शेषा दासास्त्रिपंचकाः ॥
कर्मापि द्विविधं प्रोक्तमशुभं शुभमेव च ।
अशुभं दासकर्मोक्तं शुभं कर्मकृतः स्मृतं ॥
गृहद्वाराशुचिस्थानरथ्यावकरशोधनं ।
गुह्यांगस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनं ॥
इच्छतः स्वामिनः स्वांगैरुपस्थानमथांततः ।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परं ॥

चत्वारः शिष्यांतेवासिभृतकाधिकर्मकृतः कर्मकृतं शिष्यादिचतुष्टयस्याशोधनमिति प्रत्येकमभिसंबध्यते ग्रहणं च उज्झनं च ग्रहणोज्झनं "उज्झ त्यागे" इत्यस्माद्धातोर्ल्यनटि रूपं । इच्छतः स्वामिन इच्छानुसारेणांगैर्हस्तादिभिः उपस्थानं संवाहनं तत्रांगानामेव अंततः समीपतः । कात्यायनः ।

विण्मूत्रोत्सर्जने चैव नग्नत्वपरिमर्दनं ।
प्रायो दासीसुताः कुर्युर्गवादिग्रहणं च यत् ॥

नग्नत्वपरिमर्दनं परिधापनं नग्नत्वे सति परिमर्दनं संवाहनमिति पारिजातः । पंचदशविधदासमाह नारदः ।

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अन्नाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितो महतश्चर्णाद्युद्धे प्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥

भक्तदासश्च विक्षेपस्तथैव वडवाभृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पंचदश स्मृताः ॥

गृहे जातः स्वदास्या जातः। क्रीतो मूल्येन स्वीकृतदास्यः । लब्धः प्रतिग्रहादिना । दायादुपागतः पित्रादिक्रमादुपागतः । अन्नाकालभृतो दुर्भिक्षे अन्नं दत्वा रक्षितप्राणः। आहित आधीकृतः । मोक्षितो महत ऋणात् ऋणमोचनेनाभ्युपगतदास्यः । युद्धे प्राप्तो रणे विजित्य गृहीतः । पणे जितो यद्यस्मिन् विवादे पराजितो भवानीत्यादिपरिभाषणेन दासीकृतः । एवमेव चंडेश्वरः । प्रकाशकारपारिजातौ तु द्यूतजित इत्यर्थ इत्याहतुः । तवाहमित्युपगतः तवाहं दास इति कृताभ्युपगमः । प्रव्रज्यावसितः प्रव्रज्याभ्रष्टः कृतः कृतकालः एतावंतं कालं तवाहं दास इत्यंगीकृतदास्य इति यावत् । भक्तदासो भक्तार्थमेव सुभिक्षेऽपि अंगीकृतदास्यः । वडवाभृतः वडवा दासी तया भृतः तल्लोभादंगीकृतदास्यः । विक्रेता आत्मनः स्वविक्रयेण दासीभूतः । नारदः ।

राज्ञ एव तु दासः स्यात्प्रव्रज्यावसितो नरः ।
न तस्य हि विमोक्षोस्ति न विशुद्धिः कथंचन ॥

नरपदं ब्राह्मणेतरपरं तस्य निर्वासमात्रविधानात् । यथा कात्यायनः ।

प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः ।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविड्नृपः ॥

क्षत्रविडिति समाहारद्वन्द्वः । क्षत्रियवैश्यावित्यर्थः । दा-

स्यं क्षत्रविशौ नृप इति प्रायश्चित्तविवेके पाठः। निर्वासे विशेषमाह दक्षः।

पारिव्रज्यं गृहीत्वा यः स्वधर्मं नानुतिष्ठति।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत्॥

स्वधर्मं पारिव्रज्यव्रतधर्मं।

॥ अथ दास्यमोक्षः॥

कस्य दासस्य कथं मोक्षो वा तत्राह नारदः।

तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतं॥

तत्रेति गृहेजातक्रीतलब्धपारंपरीणा इत्यर्थः। तत्रैव च दासपदं मुख्यं। अन्यत्र पारतंत्र्यगुणयोगाद्गौणं। तेन दासेनोढेत्यत्र पूर्वचतुर्वर्गग्रहणं। तथा।

विक्रीणीते स्वतंत्रः सन् य आत्मानं नराधमः।
स जघन्यतमस्तेषां सोपि दास्यान्न मुच्यते॥

स्वतंत्रोऽस्वामिकः अत्रापि विना स्वामिप्रसादादिति संबध्यते। यत्तु।

न स्वामिना विसृष्टोऽपि शूद्रो दास्यात्प्रमुच्यते।
निसर्गजं हि तत्तस्य कस्तं तस्माद्व्यपोहति॥

इति मार्कंडेयपुराणे हरिश्चंद्रवाक्यं तद्दासनिंदापरं। अन्यथा शूद्रेषु दास्यहेतुक्रयणादिकं न प्रसज्येतेति।

अन्नाकालभृतो दास्यान्मुच्यते गोयुगं ददत्।
भक्षितं चापि यद्वस्तु तन्न शुध्यति कर्मणा॥

दुर्भिक्षे यद्भक्षितं तद्गोयुगसहितं ~ ।

मेव विषादचिंतामणिः । चंडेश्वरस्तु अन्नाकालभृतो दुर्भिक्षे अन्नं दत्वा मरणाद्रक्षितो गोयुगप्रदानेन मुच्यते न तु यत् भक्षितं तेन तत्कर्मणा शुद्ध्यति अतस्तच्छुद्ध्यर्थमवश्यं गोयुगं दातव्यमित्याह । नारदः ।

आहितोपि धनं दत्वा स्वामी यद्येनमुद्धरेत् ।
अथोपगमयेदेनं सोपि क्रीतादनंतरः ॥

यस्मिन्नाहितो बंधकीकृतो दासस्तमेव यदि ग्राहयेत्तदा क्रीतादनंतरः क्रीतादविशिष्टो भवतीत्यर्थः । स एवाह ।

ऋणं तु सोदयं दत्वा ऋणी दास्याद्विमुच्यते ।
कृतकालव्युपरमात्कृतकोऽपि विमुच्यते ॥

ऋणार्थं कर्म कारयेदिति वचनेन ऋणार्थकर्मकरः कथितो न तु वस्तुदासः । अत एव मोच्यः तथा यः कश्चित्कस्माच्चिद्धेतोर्ऋणस्थितिकालं यावद्दासीकृतः स कृतकः कर्मणा ऋणक्षयेणावधौ पूर्णे मुच्यते इत्यर्थः । तथा

तवाहमित्युपगतो रणे प्राप्तः पणे जितः ।
प्रतिशीर्षप्रदानेन मुच्यते तुल्यकर्मणा ॥

प्रतिशीर्षप्रदानेन स्वतुल्यदासप्रदानेनेत्यर्थः । नारदः

तवाहमित्युपगतो योऽस्वतंत्रः प्रयच्छति ।
न स तं प्राप्नुयात्कालं पूर्वस्वामी लभेत तं ॥

उत्तरस्य स एवासौ न भवतीत्यर्थः । कात्यायनः ।

प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः ।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविण्नृपः ॥

क्षत्रविडिति व्याख्यातार्थं । निर्वासे विशेषमाह दक्षः ।

पारिव्रज्यं गृहीत्वा तु स्वधर्मं नानुतिष्ठति।
श्वपदेनांकयित्वा तं राजा शीघ्रं प्रवासयेत्॥
स्वधर्मं पारिव्रज्यव्रतधर्मं।
यश्चैषां स्वामिनं कश्चिन्मोक्षयेत्प्राणसंशयात्।
दासत्वात्स विमुच्येत पुत्रभागं लभेत सः॥
एषां मध्ये। तथा।
भक्तस्योपेक्षणात्सद्यो भक्तदासः प्रमुच्यते।
निग्रहाद्वडवायाश्च मुच्यते वडवाभृत॥
निग्रहात् त्यागात्। वडवाया दास्याः। नारदः।
चौरापहृतविक्रीता ये च दासीकृता बलात्।
राज्ञा मोचयितव्यास्ते दासत्वं तेषु नेष्यते॥
कात्यायनः।
स्वदासीं यस्तु संगच्छेत् प्रसूता च भवेत्ततः।
अवेक्ष्य बीजं कार्या स्याददासी सान्वया तु सा॥

अस्यार्थः। अवेक्ष्य बीजं स्वामिना तस्यां जनितं पुत्र सान्वया तत्पुत्रसहिता अदासी कार्या। इदमन्यपुत्राभावे अन्यथा त्वन्य एव पुत्रस्तदर्थक्रियायामिति न सान्वया अदासी कार्येति रत्नाकरप्रकाशकारपारिजातादयः। मिश्राणामप्यत्रैव स्वरसः। यः प्रसादेनादासः कार्यस्तत्र प्रकारमाह नारदः।

स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः।
स्कंधादादाय तस्याशु भिंद्यात्कुंभं सहांभसा॥
साक्षताभिः सपुष्पाभिर्मूर्द्धन्यद्भिरवाकिरन्।

अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥
ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्यान्नोऽथ प्रतिग्राह्यो भवेदभिमतः सतां ॥
अधनास्त्रय एवैते भार्य्या दासस्तथा सुतः ।
यं ते समधिगच्छंति यस्यैते तस्य तद्धनं ॥

प्रीतमानसस्तुष्टः स्कधात्स्वदासस्य कुम्भं भिंद्यात् । अम्भसा सलिलेन सह अक्षिः पानीयैः उत्सृजेत् विसृजेत् । ततः प्रभृति स्वाम्यनुग्रहपालित इति संज्ञया वक्तव्यः अभिमतः पूज्यः । देवलः ।

पत्यौ जीवति नारीणां दासानां स्वामिनि स्थिते
तद्वन्नियतमस्वाम्यं सर्वार्थेष्वब्रवीन्मनुः ॥ क-
विश्रब्धं ब्राह्मणः शूद्राद्द्रव्यापादानमाचरेत् । क-
नहि तस्यास्ति किंचित्स्वं भर्तृहार्य्यधनो हि सः क-

कात्यायनः ।

दासस्य तु धनं यत्स्यात्स्वामी तत्र प्रभुर्यतः ।
प्रसादविक्र्याद्यत्तु न स्वामी धनमर्हति ॥

स्वामिप्रसादादात्मविक्रयाच्च यल्लब्धं दासेन तद्दासधनं स्वामी नार्हति । एवमेव वाचस्पतिमिश्रप्रकाशकारकामधेनुपारिजातादयः । 'प्रकाशविक्रयाद्यत्तु तत्स्वामी धनमर्हति' । इति लक्ष्मीधरेण पठितं न तु व्याख्यातं तत्र प्रकाशविक्रयाद्यत् धनं तत्स्वामी दास एवार्हति । न दासप्रभोस्तत्र प्रभुत्वमित्यर्थः इति रत्नाकरः ।

दासेनोढा त्वदासी या सापि दासीत्वमाप्नुयात् ।

यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः ॥
अत्र दासपदोपस्थापितप्रतियोगिकमेवादासीत्वं च यदि न्यायात् अतोऽस्वामिकान्यस्वामिका वा परिणीता सती वरस्वामिनः स्वीभवति। अर्थाच्च दासीयत्वं पूर्वस्वामिदास्यमोक्षहेतुरुक्तः। अत एव तत्प्रकरणे वाक्यमिदं स्वाम्यनुमत्या च दासकृतं प्रमाणमतस्तद्विमतिविषये चेटिकापरिणयनात् न पूर्वस्वामिस्वत्वहानिरिति॥

॥ अथ दास्याधिकारिणः ॥

तत्र नारदः।

वर्णानां प्रातिलोम्येन दासत्वं न विधीयते।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ॥
कामस्य नीचदासत्वं न भवति दारत्ववत्स्वाश्रमधर्मत्यागिनः पुनस्तादृशी दासतेति फलितार्थः। विष्णुः॥
यस्तूत्तमवर्णं दास्ये नियोजयति तस्योत्तमसाहसो दंडः॥
उत्तमवर्णं ब्राह्मणं उत्तमसाहसः पणसहस्रं। कात्यायनः

त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित्।
समवर्णं तु विप्रस्तु दासत्वं नैव कारयेत् ॥
शीलाध्ययनसंपन्नस्तदूनं कर्म कारयेत्।
तत्रापि नाशुभं किंचित्प्रकुर्वीत द्विजोत्तमः ॥
ब्राह्मणस्य हि दासत्वान्नृपतेजो विहन्यते।
क्षत्रविट्शूद्रधर्मस्तु समवर्णं कदाचन ॥
कारयेद्दासकर्माणि ब्राह्मणं न बृहस्पतिः।
सगुणो निर्गुणं अधिकगुणो न्यूनगुणं कर्म कारयेत्।

तत्रापि अशुभं विण्मूत्रशोधनादिकं न कारयेत्। क्षत्रियवैश्यशूद्राणां तु समानगुणानामपि सवर्णेपि क्वचित्-दासस्वामिभावो भवेत्। ब्राह्मणस्तु समवर्णं समानगुणं वा न कारयेदिति बृहस्पतिर्मन्यत इति पारिजातहलायुधौ। क्षत्रविट्शूद्रधर्मस्तु ब्राह्मणो ब्राह्मणं दासकर्माणि न कारयेदिति लक्ष्मीधरः। मनुः।

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्षितौ।
बिभृयादानृशंस्येन स्वानि कर्माणि कारयेत्॥

स्वानि स्वजात्युक्तानि।

दास्यं तु कारयन्मोहाद्ब्राह्मणः संस्कृतान् द्विजान्।
अनिच्छतः प्रभावित्वाद्राज्ञा दंड्यः शतानि षट्॥

प्रभावित्वात्प्रभुत्वात्संस्कृतान् अध्ययनसंपन्नान् तेन यो ब्राह्मणः शीलाध्ययनसम्पन्नान् अनिच्छतः स्वप्रभुत्वात् द्विजानुचितकर्माणि कारयेत्। स राज्ञा षट्शतानि दंड्य इत्यर्थः। तथा

शूद्रं तु कारयेद्दास्यं क्रीतमक्रीतमेव वा।
दास्यायैव हि सृष्टोऽसौ स्वयमेव स्वयंभुवा॥
न स्वामिना विसृष्टोपि शूद्रो दास्याद्विमुच्यते।
निसर्गजं हि तत्तस्य कथं तस्माद्व्यपोहति॥

शूद्रं तु क्रीतमक्रीतं वा दास्यं जघन्यमपि कारयेत्। दास्याद्दासकर्मणः। कात्यायनः।

आदद्याद्ब्राह्मणीं यस्तु विक्रीणीयात्तथैव च।
राज्ञा तदकृतं कार्यं दंड्याः स्युः सर्व एव ते॥

कामतः संश्रितां यस्तु दासीं कुर्यात्कुलस्त्रियं ।
संक्रामयति वान्यत्र दंड्यस्तत्राकृतं भवेत् ॥
यः स्वेच्छयोपगतामपि कुलस्त्रियं दासीं कुर्यात् अन्यस्मै वा समर्पयेत् स दंड्य इत्यर्थः । तथा
बालधात्रीमदासीं च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं च प्राप्नुयात् पूर्वसाहसं ॥
विक्रोशमानां यो भक्तां दासीं विक्रेतुमिच्छति ।
अनापदिस्थः शक्तः सन् प्राप्नुयाद्द्विशतं दमं ॥
बालधात्रीं बालस्य स्तन्यदानेन पोषणं कुर्वाणां अदासीं निःक्षिप्तां शरणागता इति विश्वरूपः । परिचारकः सेवकः विक्रोशमानां नाहं विक्रेतव्येति वदंतीम् । पूर्वसाहसं सार्द्धपणशतद्वयं ॥ ५ ॥ ५ ॥ ५

॥ अथ वेतनस्यानपाकर्म ॥

तत्र नारदः ।
भृतानां वेतनस्योक्तिर्दानादानविधिक्रिये ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतं ॥
भृत्याय वेतनं दद्यात्कर्म स्वामी यथा कृतं ।
आदौ मध्यवसाने वा कर्मणां यद्विनिश्चितं ॥
भृतावनिश्चितायां तु दशमं भागमाप्नुयुः ।
लाभे गोवीर्यसस्यानां वणिग्गोपकृषीवलाः ॥

विशेषमाह याज्ञवल्क्यः ।

यो यावत्कुरुते कर्म तावत्तस्य तु वेतनं ।
उभयोरप्यसाध्यत्वात् साध्यं कुर्याद्यथाश्रुतं ॥

अनेकपुरुषैर्यत्साध्यं कर्म तत्रोभयोरप्यसाध्ये कर्मानुसारेण वेतनं देयं । यत्र तु स्वामिकर्मकारयोरन्यतरस्य साध्यं भवति तत्र यथाश्रुतं यथाविहितं वंटनं कार्यमित्यर्थः । पारिजातस्तु उभयोरपीत्युभयग्रहणं अनेकोपलक्षणार्थं । तेन द्वाभ्यामशक्यकर्माणि यो यावत्कर्म करोति तस्मै कर्मानुसारेण वेतनं देयं साध्ये तु यथाश्रुतं यथापरिभाषितमित्यर्थ इत्याह । बृहस्पतिः ।

त्रिभागं पंचभागं वा गृह्णीयात्सीरवाहकः ॥

तत्र व्यवस्थामाह स एव ।

भक्ताच्छादनभृत्सीरी भागं गृह्णीत पंचकं ।
जातसस्यत्रिभागं तु प्रगृह्णीतोपधाभृतः ॥

उपधया व्यापारफलेन सस्यादिना भृतः तेन भक्ताच्छादनभृतादन्य इत्यर्थः । नारदोक्तो दशमांशः सीरवाहकेतरविषयः । आपस्तम्बः "उद्वसतःकीनाशस्य दंडताडनं तथा पशुपस्यावरोधनं चास्य पशूनां" उद्वसतः पलायमानस्य कीनाशस्य हलवाहकस्य दंडताडनं । तथा पशुपालकस्य दंडताडनं अस्य पशूनां चावरोधनं कार्यमित्यर्थः । वृद्धमनुः ।

समुद्रयानकुशला देशकालार्थवेदिनः ।
नियच्छेयुर्भृतिं यां तु सा स्यात् मागरुता यदि ॥

समुद्रयानकुशला वणिग्वेतनाभिज्ञा नियच्छेयुर्दद्युरि-
त्यर्थः। बृहस्पतिः।

गृहीतवेतनः कर्म न करोति यदा भृतः।
समर्थश्चेद्दमं दाप्यो द्विगुणं तच्च वेतनं॥

समर्थः सन् चेत्कर्म न करोतीति संबंधः। याज्ञवल्क्यः

गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत्।
अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः॥

कर्मारभ्य त्यजन् गृहीतवेतनो द्विगुणं वेतनं दद्यात्। अगृहीतवेतनः समं परिस्थापितादनधिकं न द्विगुणमित्यर्थः। भृत्यैर्हलवाहकादिभिः। रक्ष्यो रक्षणीयः उपस्करो लांगलकादीनां योक्त्रादि। नारदः।

कर्म्माकुर्वन्प्रतिश्रुत्य कार्य्यो दत्वा भृतिं बलात्।

भृतिं दत्वा बलात् कर्म कार्यः कारयितव्य इत्यर्थः। बृहस्पतिः।

प्रतिश्रुत्य न कुर्याद्यः स कार्यः स्याद्बलादपि।
स चेन्न कुर्यात्तत्कर्म प्राप्नुयाद्विशतं दमम्॥

इदमारभ्याकुर्वतः। अनारंभे तु मनुः।

भृतोऽनार्तो यो न कुर्याद्दर्पात् कर्म यथोदितं।
स दंड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनं॥
यथोक्तमार्तः सुस्थो वा यस्तत्कर्म न कारयेत्।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः॥

अनार्तः कर्माकरणहेतुराजदैवोपघातरहितः कृष्णलानि सुवर्णस्येति शेषः। न कारयेत्स्वयमन्यद्वारा वा अल्पो-

नस्य किंचिदपरिसमाप्तस्य । तथा मनुः ।

आर्तस्तु कुर्यात् सुस्थः सन् यथाभाषितमादितः ।
सुदीर्घस्यापि कालस्य स लभेतैव वेतनं ॥

यस्त्वार्तिवशात् कर्म हित्वा सुस्थः संश्चिरेणापि कृत्वा वेतनं लभेतेत्यर्थः । नारदः ।

काले पूर्णे त्यजन्कर्म भृतेर्नाशमवाप्नुयात् ।
स्वामिदोषादपक्रामन् यावत्कृतमवाप्नुयात् ॥

भृतेरखंडायाः सर्वस्या इति यावत् । तेन तद्दोषात्यागे कियत्यपि भृतिर्न देया यदा त्वपूर्ण एव काले स्वामिदोषात्त्यागस्तदा यावत्कृतं तावतो भृतिं लभेतेत्यर्थः । विष्णुः ॥ भृतकः अपूर्णे काले कर्म त्यजन्सकलमेव मूल्यं दद्यात् । राज्ञे च पणशतं दद्यात् तद्दोषेण यद्विनश्येत् तत्स्वामिने देयमन्यत्र राजदैवोपघातात् । स्वामी चेत् भृतकमपूर्णे काले जह्यात् तस्य स कृतमेव मूल्यं दद्यात् पणशतं राज्ञे अन्यत्र भृतकदोषात् ॥ इति । मूल्यं वेतनं । वृद्धमनुः ।

प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितं ।
न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन वा ॥

दाप्यो भृतकः प्रकरणात् । हृतं चौरैर्दग्धमूढं जलेन वेत्यनेन भृतकदोषव्यतिरेकेण विघटितमुपलक्ष्यते इति रत्नाकरः । मिश्राणामप्ययमेव स्वरसः । बृहस्पतिः ।

प्रभुणा विनियुक्तः सन्भृतको विदधाति यत् ।
तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात् ॥

तदर्थं स्वाम्यर्थं अशुभं चौर्यादि स्वामिन एव तत्र दोषो न तु भृत्यस्येत्यर्थः। वृद्धमनुः।

यः कर्मकाले संप्राप्ते कार्यविघ्नं समाचरेत्।
उद्धर्तान्यस्य कार्यस्य स दाप्यो द्विगुणां भृतिं॥

मत्स्यपुराणे।

मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति।
दंड्यः स मूल्यं सकलं धर्मज्ञेन महीभृता॥

वृद्धमनुः।

पथि विक्रीय तद्भांडं वणिग्भृत्यं त्यजेद्यदि।
अगतस्यापि देयं स्याद्भृतेरर्द्धं लभेत्तु सः॥

अगतस्यापि पूर्वश्रावितं अध्वानमगतस्यापि भृतकस्य कृतवेतनं देयं स्यात्किं स्वगताध्ववेतनार्द्धमित्यर्थः।

कात्यायनः।

पराचपथि तद्भांडमासिध्येत म्रियेत वा।
यावानध्वा गतस्तेन तावतो लभते भृतिं॥

आसिध्येत अवरोधविषयीक्रियेत। कात्यायनः।

त्यजेत्पथि सहायं यः श्रातं रोगार्त्तमेव वा।
आप्नुयात्साहसं पूर्वं ग्रामे त्र्यहमपालयन्॥

यः स्वामी ग्रामे त्र्यहमप्रतिपाल्य श्रांतं रोगार्तं वा सहायं भृतकरूपं त्यजेत् स पूर्वसाहसं राज्ञा दंड्य इत्यर्थः॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

॥ अथ पण्यस्त्रीविधिः॥

तत्र नारदः।

शुल्कं गृहीत्वा पण्यस्त्री नेच्छंती द्विगुणं वहेत् ।
अनिच्छञ्छुल्कदातापि शुल्कहानिमवाप्नुयात् ॥

शुल्कं वेतनं । अत्रापवादमाह रत्नाकरभृता स्मृतिः ।

व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा ।
आमंत्रिता च नागच्छेदवाच्या वडवा स्मृता ॥

अवाच्या निर्दोषा । वडवात्र वेश्या । मत्स्यपुराणे ।

अयोनौ यः समाक्रामेद्बहुभिर्वापि वासयेत् ।
शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु ॥

अयोनौ मुखादौ यः समाक्रामेन्मेहनं प्रवेशयेत् । बहुभिर्वा वासयेत् आत्मार्थं भाटयित्वा बहुभिः पुरुषैर्योजयेत् । स वेश्याशुल्कमष्टगुणं राजदंडं च दद्यादित्यर्थः। मत्स्यपुराणे ।

अन्यमुद्दिश्य यो वेश्यां नयेदन्यस्य कारणात् ।
तस्य दंडो भवेद्राज्ञः सुवर्णस्य च माषकं ॥
नीत्वा भोगं न यो दद्याद्दाप्यो द्विगुणवेतनं ।
राज्ञश्च द्विगुणं दंडं तथा धर्मो न हीयते ॥
बहूनां व्रजतामेकां सर्वे ते द्विगुणं दमं ।
संप्रदद्युः पृथग्राज्ञे दंडं च द्विगुणं परं ॥

अत्र द्विगुणो दंडो दमो दंडः स च स्त्रियै राज्ञे च देयः । नारदः।

वेश्या प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः ।
तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः ॥

प्रधाना स्त्रीलिंगनिर्देश आर्ष इति प्राञ्चः। प्रधाना द्व-

रिणा सुंदरा इत्यादिदर्शनात् । प्रधानशब्दस्य क्लीबत्वमि-
त्येके तत्समुत्थेषु वेश्यागृहोपितकामुकसमुत्थेषु । संशये
वेश्याकामुकविप्रतिपत्तौ ॥ ५ ॥ ५ ॥ ५ ॥ ५ ॥

॥ अथ गृहादिभाटकं ॥

तत्र नारदः ।

परभूमौ गृहं कृत्वा स्तोमं दत्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टिकादिकं ॥
स्तोमं विना वसित्वा तु परभूमावनिच्छतः ।
निर्गच्छंस्तृणकाष्ठानि न गृण्हीयात् कथंचन ॥

स्तोमं वासमूल्यं । कात्यायनः ।

गृहवार्यापणादीनि गृहीत्वा भाटकेन यः ।
स्वामिने नार्पयेद्यावत्तावद्दाप्यः स भाटकं ॥

वारिपरकारितप्रतिष्ठितमत्र विवक्षितं । तथा

हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः ।
नार्पयेत् कृतकृत्यः संस्तावद्दाप्यः स भाटकं ।

वृद्धमनुः ।

यो भाटयित्वा शकटं नीत्वान्यत्र प्रगच्छति ।
भाटं न दद्याद्दाप्योऽसावनूढस्यापि भाटकं ॥

शकटमिति वाह्यमात्रोपलक्षणं । अनूढस्यापि अवा-
हितस्यापि । नारदः ।

स्तोमवाहीनि भांडानि पूर्णकालेऽप्युपानयेत् ।
गृहीतुराभवेद्भग्नं नष्टं चान्यत्र संप्लवात् ॥

स्तोमं वेतनं पूर्णकालेऽवधिकाले उपानयेत् तत्स्वा-

रक्षार्थमुपनयेत् चीर्णाः भक्षिततृणाः पीताः पीतजलाः सायान्हे ईषदवशिष्टदिने प्रत्युपानयेत्स्वामिने समर्पयेत् । याज्ञवल्क्यः ।

यथार्पितान् पशून्गोपः सायं प्रत्यर्पयेत्तथा ।

प्रमादहृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥

प्रमादः पालस्येत्यादि यथैव प्रातःसमये व्रणादिदोषरहिताः पशवः स्वामिना च गोपालाय समर्पिताः तथैव सायंसमये गोपस्तानानीय समर्पयेत् । प्रमादात् हृतां नष्टां वा गां दाप्यः स यदि कृतवेतनो भवेदिति दीपस्तोर्म । मनुः ।

गृहवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ।

स्वामिनावन्यथा चेत् पालो वक्तव्यतामियात् ॥

वारिपरकार्येनुयोगः यदि योगक्षेमौ । अन्यथा रात्राव-

हररमश्चगोख्यस्थापितौ तदा स एव रात्रावपि वक्तव्य-

मार्पयेत् कृत अत्रापवादमाहतुर्मनुनारदौ ।

वृद्धमनुः । हृतं चौरैर्न पालो दातुमर्हति ।

भार्टा च काले च स्वामिनः स्वस्य शंसति ॥

देशे न द अन्वेषणयोग्ये इति विवादरत्नाकरः । चौरैः

नः पदमिति । विघुष्य हृतं पालो दातुं नार्हति विघुष्ये-

त्ये चौरापि । नारदः । पचलत्वकथनपरं यदि सन्निहिते देशे

हरणकाले ... वारमीयस्वामिनः कथयतीति कुल्लूकभट्टः । विघुष्येत्यत्र विक्रम्येति पाठोपि दृश्यते । तथा व्यासः ॥

पालग्रहे ग्रामघाते तथा राष्ट्रस्य विप्लवे ।
यत्प्रणष्टं हृतं वा स्यान्न पालस्तत्र किल्बिषी ॥

पालग्रहे पालग्रहणे निरोध इति यावदिति चंडेश्वरः । बृहस्पतिः ।

कृमिचौरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत् ।
व्यायच्छेच्छक्तितः क्रोशेत्स्वामिने वा निवेदयेत् ॥

दरी कंदरा श्वभ्रं गर्तः कृम्याद्युपद्रवेभ्यः शक्तितो रक्षां कुर्यात् क्रोशेत् उच्चैः परान् श्रावयेत् । नारदः ।

अव्यायच्छन्नविक्रोशन्स्वामिने चानिवेदयन् ।
वोढुमर्हति गोपस्तां विनयं चैव राजनि ॥

वोढुं दातुं तां गां । मनुनारदौ ।

नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतं ।
हीनं पुरुषकारेण प्रदद्यात्पाल एव च ॥

नष्टं चौरादिनापहृतं विनष्टमिति कृमिभिरितरत्रान्वेति। अत्र श्वपदमन्यस्याप्युपलक्षकं विषमे दुर्गे पर्वतादौ हीनं पुरुषकारेण गोपकर्तव्यप्रतीकारेण हीनं सन्नष्टादिकं भूतं तेन पालवैगुण्यं तद्धाने कारणमित्यर्थः। याज्ञवल्क्यः।

पालदोषविनाशे तु पाले दंडो विधीयते ।
अर्द्धं त्रयोदशपणाः स्वामिनो द्रव्यमेव च ॥

पालदोषाद्विनाश इति विग्रहः। द्रव्यं विनष्टद्रव्यमूल्यपरं चैतत्। तथाच विष्णुः॥ पालदोषविनष्टपशुमूल्यं च स्वामिने दद्याद्वचनानुज्ञानाद्दहने पंचविंशतिकार्षापणान्॥ इति । ब्रह्मपुराणे ।

गृहीतमूल्यो गोपालो गास्त्यक्त्वा निर्जने वने।
ग्रामचारी नृपैर्वध्यः शलाकीव वनेचरः ॥

गा जातरोगाः । शलाकीवेति शलाकी शिरावैद्यादिः स यथा स्वामिनं त्यक्त्वा स्वेच्छया वनगामी दंड्यस्तथा ग्रामपीत्यर्थ इति रत्नाकरः । शलाकी नापित इति मिश्राः ।

यदा रोगादिदोषेण म्रियते गौर्गृहे क्वचित् ।
तदा स गोपतिर्दंड्यो दत्वा गोपालवेतनं ॥

यदा प्रतीकारसमर्थेन गोपतिना अप्रतिकृता गौ रोगादिना विनष्टा तदासौ गोपती राज्ञा दंड्यः गोपस्य वेतनं दापयितव्यमिति वर्तुलार्थः । एवमेव रत्नाकरः । मनुनारदौ ।

अजाविके तु संरुद्धे वृकैः पाले त्वनायति ।
यां प्रसह्य वृको हन्यात् पाले तत्किल्बिषं भवेत् ॥

अजाविकशब्देन पशव उपलक्ष्यंते। संरुद्धे अभिभूते अजाविके वृकैः परिवृते सति पालेऽनागच्छति यामजामेडकां वा बलेन वृको हन्यात्तत्र पालो दोपभागित्यर्थ इति कुल्लूकभट्टः । नारदः ।

अनेन सर्वपालानां विवादः समुदाहृतः ।
मृतेषु च विशुद्धिः स्याद्बालशृंगादिदर्शनात् ॥

अनेन एतेन सर्वपालानामश्वादिपालानामपि बालशृंगादिदर्शनात् केनापि प्रकारेण मृतत्वं निश्चितं कुर्यादिति तात्पर्यार्थः । व्यक्तमाह मनुः ।

कर्णौ चर्म च वालांश्च बस्तिं स्नायूनि रोचनाः ।
पशुस्वामिनि दद्याच्च मृते स्वंगानि दर्शयेत् ॥
कर्णावित्यादिना मृतपशोरसाधारणचिह्नान्युपलक्ष्यंते । अंगानीत्यत्र व्यवहितमृते अंगानि चिरावस्थायीनि शृंगादीनि मृते शृंगादीत्यपि पाठः ॥ ५ ॥ ॥ ५ ॥

अथ विक्रीयासम्प्रदानं ॥

तत्र बृहस्पतिः ।
समासेनोदितस्त्वेष समयाचारनिर्णयः ।
क्रयविक्रयसंज्ञातो विवादः श्रूयतामयं ॥

तत्स्वरूपमाह नारदः ।
विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति ।
विक्रीयासंप्रदानं तद्विवादपदमुच्यते ॥
लोकेऽस्मिन् द्विविधं द्रव्यं स्थावरं जंगमं तथा ।
क्रयविक्रयधर्मेषु सर्वं तत् पण्यमुच्यते ॥
विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति ।
स्थावरस्य क्षयं दाप्यो जंगमस्य क्रियाफलं ॥
अर्घाच्चेदवहीयेत सोदयं पण्यमाहरेत् ।
स्थायिनामेष नियमो दिग्लाभो दिग्विचारणम् ॥

स्थावरस्य विक्रीतभूम्यादेः क्षयः सस्याद्युपचितेभाव-क्षयः जंगमस्य तथाविधस्य वृषभादेः क्रिया वाहनादिका फलं क्षीरादि यदि विक्रेता प्राप्तमूल्योऽपि पण्यं न ददाति तच्च पण्यं कालवशादपचितार्घं भवति तस्मै तद्देशस्थाय क्रेत्रे सोदयं क्रयकालीनमूल्ये यावत्तत्का-

इति चंडेश्वरः। व्यासः।

सत्यंकारं च यो दद्याद्यथाकालं न गृह्यते।
पण्यं भवेद्विसृष्टं तद्दीयमानमगृह्णतः॥

यत्र क्रेता क्रयणार्थं सत्यंकारक्रमं दद्यात् तस्य पण्यं दीयमानमगृह्णतस्तत्त्वविसृष्टं त्यक्तमेव भवेत् विक्रेत्रे इति। तेन तद्द्रव्यं न क्रेत्रा विक्रेतुः पार्श्वे ग्राह्यमित्यर्थः। तथा।

दीयमानं न गृह्णाति क्रीत्वा पण्यं च यः क्रयी।
विक्रीणीत तदन्यत्र विक्रेता नापराध्नुयात्॥

याज्ञवल्क्यः।

विक्रीतमपविक्रेयं पूर्वक्रेतर्यगृह्णति।
हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत्॥

नारदः।

लाभार्थं वणिजां सर्वपण्येषु क्रयविक्रयः।
स च लाभोऽर्घमासाद्य महान्भवति वा न वा॥
तस्माद्देशे च काले च प्रक्रमेतार्घविद्वणिक्।
न जैह्मेन प्रवर्तेत श्रेयानेवं वणिक्पथः॥

मूल्यमव्यवस्थाप्य क्रीते देशकालानुसारेण व्यवस्थापको वणिक्प्रक्रमेत अनुरूपं मूल्यं प्रकल्पेत न जैह्मेन कुटिलतया प्रवर्तेत उचितं मूल्यं न खंडयेदित्यर्थः॥७॥

## अथ क्रीतानुशयः॥

तत्र नारदः।

क्रीत्वा मूल्येन यः पण्यं क्रीतं न बहु मन्यते।
क्रीतानुशय इत्येतद्विवादपदमुच्यते॥

यशातामनानीते त्ववध्यभ्यन्तरे पुनर्दातुरपि क्रेतुर्न। विक्रेतुर्दशमभागहानिः। प्रकाशदोषकस्य तु नावध्युत्तरं परावर्त्तनमित्यर्थः। नारदः।

उपहन्येत वा पण्यं दह्येतापह्रियेत वा।
विक्रेतुरेव सोऽनर्थो विक्रीयांशं प्रयच्छतः॥

याज्ञवल्क्यः।

राजदैवोपघातेन पण्यदोष उपस्थिते।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः॥

नारदः।

निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति।
मूल्यं तु द्विगुणं दाप्यो विनयं तावदेव तु॥

बृहस्पतिः।

ज्ञात्वा सदोषं यः पण्यं विक्रीणात्यविचक्षणः।
तदेव द्विगुणं दाप्यस्तत्समं विनयं तथा॥
मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा।
अस्वतंत्रेण मूढेन त्याज्यं तस्य पुनर्हरेत्॥

विक्रीणाति दोषमनुक्त्वेति शेषः। अस्वतंत्रेण स्वभावतो हेतुतो वा त्याज्यं त्यागार्हं तस्य क्रेतुः पुनर्हरेत् विक्रीतेति शेषः। एतच्च दशाहात् परतोपि। बृहस्पतिः।

योऽन्यहस्ते तु विक्रीय अन्यस्मै तत् प्रयच्छति।
सोपि तद्द्विगुणं दाप्यो विनयं तावदेव तु॥

अन्योऽज्ञातदोषोऽतत्प्रयुक्त इति यावत्। एवमेव मिश्राः। अन्यत्र मूल्यसंवादं कृत्वान्यत्र विक्रयेऽयं दंड

दशाहः सर्वबीजानामेकाहो लोहवाससाम् ॥

नारदेन एकाहेन वासःपरीक्षणप्रतिपादनाद्व्यासवाक्येपि सद्यःपदं तथैव व्याख्येयं एतत्सर्वं कालनियमनमवीक्ष्य गृहीते बोद्धव्यं। तथा च नारदः।

क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः।
परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः ॥

बृहस्पतिरपि।

परीक्षेत स्वयं पण्यमन्येषां च प्रदर्शयेत्।
परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत् ॥

याज्ञवल्क्यः।

क्षयं वृद्धिं च वणिजा पण्यानामभिजानता।
क्रीत्वा नानुशयः कार्यः कुर्वन्षड्भागदण्डभाक् ॥

नारदोपि।

क्रीत्वा नानुशयं कुर्याद्वणिक्पण्यविचक्षणः।
क्षयं वृद्धिं च जानीयात्पण्यानां यस्य यादृशी ॥

दोहादौ विशेषमाह कात्यायनः।

क्रीत्वा चानुशयात् पण्यं त्यजेद्दोहादि यो नरः।
अदुष्टमेव काले तु स मूल्याद्दशमं हरेत् ॥

काले उत्कार्पणकाले हरेद्विक्रेत्रे दद्यादित्यर्थः। इदं वाक्यं यद्वस्तु क्रेत्रा न स्वायत्तीकृतं तत्परं स्वायत्तीकृतपरं तु क्रीत्वा गच्छन्ननुशयमित्यादिभाविष्यद्वाक्यमिति न तेन विरोधः। दोषमाच्छाद्य यदा विक्रीतं तदा बहुनापि कालेन परावृत्य दातुं शक्यत एवेत्याह मनुः।

क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतं ॥
एतच्च बीजान्यभोगविनश्वरवस्त्रादिविषयं बीजविषये च पुनरन्यमेव प्रत्यर्पणावधिमाहतुर्याज्ञवल्क्यबृहस्पती ।
दशैकपंचसप्ताहमासत्र्यहार्द्धमासिकं ।
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥
बीजं व्रीह्यादि अयो लौहं वाह्यो बलीवर्दादिः रत्नं मुक्ताप्रवालादि स्त्री दासी दोह्यं महिष्यादि पुमान् दासः ॥
अतोऽर्वाक्पण्यदोषस्तु यदि संज्ञायते क्वचित् ।
विक्रेतुः प्रतिदेयं तत्क्रेता मूल्यमवाप्नुयात् ॥
दुष्टमप्यर्वागेव देयं ।
अविज्ञातं तु तत्क्रीतं दुष्टं पश्चाद्विभावितं ।
क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु ॥
काले परीक्षाकालाभ्यंतरे अन्यथा न तदूर्ध्वमित्यर्थः ॥
क्रेतृभिर्ज्ञातदोषे तु वस्तुमात्रे नारदः ।
परिभुक्तं तु यद्वासः क्लिष्टरूपं मलीमसं ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः ॥
व्यासनारदौ ।
तृणकाष्ठेष्टिकासूत्रधान्यसर्वरसस्य च ।
वस्त्रकुप्यहिरण्यानां सद्य एव परीक्षणं ॥
त्र्यहाद्दोह्यं परीक्षेत पंचाहाद्वाह्यमेव च ।
मुक्तारत्नप्रवालानां सप्ताहात्स्यात्परीक्षणं ॥
द्विपदामर्द्धमासं तु पुंसां तद् द्विगुणं स्त्रियाः ।

दशाहः सर्ववीजानामेकाहो लोहवाससां ॥

नारदेन एकाहेन वासःपरीक्षणप्रतिपादनाव्यासवाक्येपि सद्यःपदं तथैव व्याख्येयं एतत्सर्वं कालनियमनमवीक्ष्य गृहीते बोद्धव्यं। तथा च नारदः।

क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः।
परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः ॥

बृहस्पतिरपि।

परीक्षेत स्वयं पण्यमन्येषां च प्रदर्शयेत्।
परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत् ॥

याज्ञवल्क्यः।

क्षयं वृद्धिं च वणिजा पण्यानामभिजानता।
क्रीत्वा नानुशयः कार्यः कुर्वन्षड्भागदण्डभाक् ॥

नारदोपि।

क्रीत्वा नानुशयं कुर्याद्वणिक्पण्यविचक्षणः।
क्षयं वृद्धिं च जानीयात्पण्यानां यस्य यादृशी ॥

दोह्यादौ विशेषमाह कात्यायनः।

क्रीत्वा चानुशयात् पण्यं त्यजेद्दोह्यादि यो नरः।
अदुष्टमेव काले तु स मूल्याद्दशमं हरेत् ॥

काले उत्कार्पणकाले हरेद्विक्रेत्रे दद्यादित्यर्थः। इदं वाक्यं यद्वस्तु क्रेत्रा न स्वायत्तीकृतं तत्परं स्वायत्तीकृतपरं तु क्रीत्वा गच्छन्ननुशयमित्यादिभविष्यद्वाक्यमिति न तेन विरोधः। दोषमाच्छाद्य यदा विक्रीतं तदा बहुनापि कालेन परावृत्य दातुं शक्यत एवेत्याह मनुः।

नान्यदन्येन संसृष्टरूपं विक्रयमर्हति ।
न सावद्यं न च न्यूनं न दूरे न तिरोहितं ॥

अन्यत्कुंकुमादि अन्येन कुसुंभादिना । सावद्यं सदोषं। उक्तेतरदोषपरं चैतत् । न्यूनं मानहीनं दूरस्थिततयाऽज्ञातगुणदोषं इत्यर्थः । तिरोहितं वस्त्रादिना पिहितं एतच्च सर्वमेव ज्ञातं चिरेणापि परावर्त्यमिति मिश्राः ।

यस्मिन्यस्मिन्कृते कार्ये यस्येहानुशयो भवेत् ।
तमनेन विधानेन धर्म्ये पथि निवेशयेत् ॥

अनुशयोऽकरणमतिः पश्चात्ताप इत्यन्ये ।

इति विद्वद्विरचिते विवादार्णवसेतुके ।
विक्रीयासम्प्रदानाख्यैरूर्मिरेकादशी गता ॥

---

द्वादशोर्मिः ।

## ॥ अथ सीमाविवादः ॥

तत्र बृहस्पतिः ।

क्रयविक्रयानुशये विधिरेष प्रकीर्तितः ।
ग्रामक्षेत्रगृहादीनां सीमावादं निबोधत ॥

मनुः ।

सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः ।
ज्येष्ठे मासि नयेदेनां सुप्रकाशेषु सेतुषु ॥
सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीशालतालांश्च क्षीरिणश्चैव पादपान् ॥
गुल्मान्वेणूंश्च बहुधा शमीवल्लीस्थलानि च ।

शीरान्कुब्जकगुल्मांश्च यथा सीमा न हन्यते ॥
तडागान्युदपानानि वाप्यः प्रस्रवणानि च ।
सीमासंधिषु कार्याणि देवतायतनानि च ॥
भूमिच्छन्नानि चान्यानि सीमालिंगानि कारयेत् ।
सीमाऽज्ञाने नृणां वीक्ष्य लोके नित्यं विपर्ययं ॥
अश्मनोऽस्थीनि गोवालांस्तथा भस्मकपालिकाः ।
करीषमिष्टकांगाराञ्छर्करावालुकांश्च ह ॥
यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् ।
तानि संधिषु सीमाया अप्रकाशानि कारयेत् ॥

तेषामयमर्थः। नयेदुन्नयेत् सप्रकाशेषु जलादिना शाद्वलेषु सेतुष्विति सीमालिंगपरं ज्येष्ठपदमपि सीमाऽयंजककालोपलक्षकं गुल्माः प्रकाण्डरहिताः । वेणून्प्रचुरकंटकत्वादिभेदेन नानाप्रकारान् शमीवृक्षानिति भट्टः । वल्ल्यो गुडूच्यादयः स्थलानि कृत्रिममृत्पिण्डाः कुब्जकगुल्मास्तद्रूपा गुल्माः तडागानि महाम्भांसि उदपानं कूपः वाप्यः पुष्करिण्यः प्रस्रवणानि तद्व्यतिरिक्तस्रोतांसि भूमिच्छन्नानि भूम्यावृतानि उपच्छन्नानीति रत्नाकरकारेण पठित्वा आच्छन्नानीति व्याख्यातं । अन्यानि वक्ष्यमाणान्यश्मादीनि कपालिकाः कर्पराः अंगारा निर्वाणोल्मुकाः शर्कराः क्षुद्रभांडावयवाः एवंप्रकाराणि शर्करादीनि भूमिर्न भक्षयेत् न नाशयेत् न मृत्तिकात्वं नयेदिति यावत् । अप्रकाशानि कारयेत् मृत्तिकाधः स्थापयेत् । बृहस्पतिः ।

करीषास्थितुषांगारशर्कराश्मकपालिकाः ।
सिकतेष्टकगोवालकासीसास्थीनि भस्म च ॥
प्रक्षिप्य कुंभेष्वेतानि सीमांतेषु निधापयेत् ।
ततः पौगण्डबालानां प्रयत्नेन प्रदर्शयेत् ॥
वार्द्धके च शिशूनां ते दर्शयेयुस्तथैव च ।
एवं परंपराज्ञाने सीमाभ्रांतिर्न जायते ॥

ते पौगण्डबालाः । मनुः ।

*एतैर्लिंगैर्नयेत्सीमां राजा विवदतां नृणां ।*
पूर्वभुक्त्या च सततमुदकस्यागमेन च ॥

सततमविच्छेदेन पूर्वभक्त्या नयेदित्यन्वयः । उदकस्यागमो जलप्रवाहः । मनुः ।

यदि संशय एव स्याल्लिंगानामपि दर्शने ।
साक्षिप्रत्यय एव स्यात्सीमावादे विनिश्चयः ॥

यदि प्रच्छन्नः कालः लिंगदर्शनेपि केचित्प्रच्छन्नाः अंगारादिकुम्भाः सीमास्थानानंतरं नीत्वा निखाताः नायं न्यग्रोधः सीमातरुः स च नष्ट इत्यादिसंदेह एव स्यात्तदा साक्षिप्रमाणक एव सीमाविवादे निश्चय इति कुल्लूकभट्टः । कात्यायनः ।

तस्मिन्भोगः प्रयोक्तव्यः स च साक्षिषु तिष्ठति ।
लेख्यारूढश्चेतरश्च साक्ष्यमाहुर्द्वयान्वितं ॥

तस्मिन्सीमानिर्णये भोगः प्रयोक्तव्यः प्रमाणत्वेन ज्ञातव्यः । साक्षिषु भोगगतेष्विति विवक्षितं । तथा ।

साक्ष्यभावे च चत्वारो ग्रामाः सीमांतवासिनः ।

सीमाया निर्णयं कुर्युः प्रयता राजसन्निधौ ॥
सामंता वा समग्रामाश्चत्वारोथ दशापि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥
सामंतानामभावे तु मौलानां सीमसाक्षिणां ।
इमानप्यनुयुंजीत पुरुषान्वनगोचरान् ॥
व्याधाञ्छाकुनिकान् गोपान्कैवर्तान्मूलखातकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान् ।
ते पृष्टाश्च यथा ब्रूयुः सीमासंबंधिलक्षणं ॥
तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः ।

एतानि वचनानि नैकस्य महर्षेः । ग्रामाः ग्रामीणाः सीमांतवासिनः सन्निहितवासिनः समग्रामाः समाः समसंख्या ग्रामा ग्राम्याः तेन समसंख्या ग्राम्या इत्युक्तं भवति । एतदेव विवृतं चत्वार इत्यादिना । मौला ग्रामोत्पत्तिमहत्तराः अनुयुंजीत पृच्छेत् उञ्छवृत्तीन् उञ्छजीविनः मूलस्यावशिष्टजीविन इति यावत् । तेपि पर्यटनशीलत्वात्प्रायः सीमाभिज्ञा इति भावः । निगदरीतिमाह मनुः ।

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
सुकृतैः शापिताः स्वैःस्वैर्ब्रूयुस्तेपि समंजसं ॥

सुकृतैरिति वृथाभिधानेन मे सुकृतं नश्यत्विति समंजसं सत्यं ।

ते पृष्टास्तु यथा ब्रूयुः सामंताः सीमनिर्णयं ।
निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ॥

नारदः ।

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ॥
एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत् ।
रक्तमाल्यांबरधरः क्षितिमारोप्य मूर्द्धनि ॥

सोपवासत्वमत्राधिकं । एकश्चेदत्यंतमुत्तम उभयानुमतो भवति तदा सोपवासो रक्तमाल्याम्बरधरो मूर्ध्नि क्षितिमारोप्य सीमां समुन्नयेदित्यर्थः । बृहस्पतिः ।

ज्ञातृचिन्हविनाशे च एकोप्युभयसम्मतः ।
सत्यव्रतः सोपवासः सीमां संदर्शयेन्नरः ॥

ज्ञातृचिन्हविनाशे ज्ञातॄणां चिन्हानां चाभावे । कात्यायनः ।

कर्त्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता ।
त्यक्तदुष्टांश्च सामंतान् गत्वा मौलादिभिः सह ॥
संमिश्रं कारयेत्सीमामेवं धर्मविदो विदुः ।

सामंताः सीमाप्रभवाः सीमानिकटे उत्पन्ना इति यावत् । कात्यायनः ।

ग्रामो ग्रामस्य सामंतः क्षेत्रं क्षेत्रस्य कीर्त्तितं ।
गृहं गृहस्य निर्दिष्टं समतात् परिरभ्य च ॥

समंतात् परिरभ्येति यः परिवेष्टयित्वा स्थितश्चतुर्दिक्षु ग्रामादेः स एव सीमासाक्षी एवं क्षेत्रगृहयोरपीत्यर्थः । मौललक्षणमाह स एव ।

ये यत्र पूर्वसामंताः पश्चाद्देशांतरं गताः ।

तत्तन्मूलात्तु ते मौला ऋषिभिः संप्रकीर्तिताः ॥
नारदः।
यदा तु स्युर्न ज्ञातारः सीमाया न च लक्षणं।
तदा राजा द्वयोः सीमामुन्नयेदिच्छया स्वयं ॥
स्वेच्छयेत्यर्थः। बृहस्पतिः।
या राज्ञा क्रोधलोभेन च्छलन्यायेन वा कृता।
प्रदत्तान्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥
क्रोधादिना कृतापि राज्ञा निवर्त्या सीमा अन्या तु तत्कृता रक्षणीयेत्यर्थः।
प्रमाणरहिते ह्यर्थे भुञ्जतो यस्य वा हृता।
गुणाधिकाय वै दत्ता तस्य तां न विचालयेत् ॥
बृहस्पतिः।
अन्यग्रामात्समाहृत्य दत्तान्यस्य यदा मही।
महानद्याथवा राज्ञा कथं तत्र विचारणा ॥
योत्सृष्टा राजदत्ता वा यस्य तस्यैव सा मही।
अन्यथा न भवेल्लाभो नराणां राजदैवकः ॥
क्षयोदयौ जीवनं च राजदैववशान्नृणां।
यस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत् ॥
ग्रामयोरुभयोर्यत्र मर्यादाकल्पिका नदी।
क्षयोदयेन चान्यासां चालयन्दंडमर्हति ॥
एकत्र कूलपातं तु भूमेरन्यत्र संस्थितिं।
तीरे नदी प्रकुरुते तस्य तां न विचालयेत् ॥
कूलपातक्रमेण या भूः सोत्तरस्वामिन एवेत्यर्थः।

क्षेत्रं समस्तमुल्लंघ्य भूमिश्छिन्ना यदा भवेत्।
नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेत्तु तां ॥

क्षेत्रोल्लंघनेन नदीसंचारेपि तल्लङ्घिता भूः पूर्वस्वामिन एव तिष्ठतीत्यर्थः। याज्ञवल्क्यः।

आरामायतनग्रामनिपानोद्यानवेश्मसु।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥

आरामः समीपवनोपलक्षितभूभागः। आयतनं देवगृहभूमिः निपानं कूपाकृष्टपानीयोपलक्षितनिम्नभूभागः। एष साक्षिसामंताधिरूपो विधिः। वर्षाबुप्रवहादिषु वृष्टितोयौघवर्त्मादिषु। मनुः।

क्षेत्रकूपतडागानामारामस्य गृहस्य च।
सामंतप्रत्ययो ज्ञेयः सीमासंधिविनिर्णयः ॥

बृहस्पतिः।

निवेशकालादारभ्य गृहवाप्र्यंगणादिकं।
येन यावद्यथा भुक्तं तस्य तन्न विचालयेत् ॥
वातायनाः प्रणाल्यश्च तथा निर्व्यूहवेदिकाः।
चतुःशाल्यं स्यंदनिकाः प्राङ्निर्दिष्टा न चालयेत् ॥

वातायनं गवाक्षः प्रणाली जलनिर्गममार्गः निर्व्यूहो नागदंतकः वेदिका प्रतोल्यादिसंस्कृतोन्नता भूः चतुःशालं चतुर्द्वारगृहं स्यन्दनिका पटलप्रांतः। कात्यायनः।

मेखलाभ्रमनिष्काशगवाक्षान्नोपरोधयेत्।
प्रणालीं गृहवास्तुं च पीडयन्दंडभाग्भवेत् ॥
निवेशसमयादूर्द्ध्वं नैते योज्याः कदाचन।

दृष्टिपातं प्रणालीं च न कुर्यात्परवेश्मनि ॥

मेखला गृहादिमूलबंधः। भ्रमो जलविभ्रम इति मिश्राः। भ्रमोऽन्नजलनिर्गमप्रदेश इति चंडेश्वरः। निष्काशो हर्म्यादिभित्तिषु निर्गतकाष्ठादिनिर्मितास्पृष्टभूमिकोपवेशनस्थानमिति कल्पतरुः। निष्काशो निःसरणपथ इति विवादचिंतामणिः। नोपरोधयेन्न निरुंध्यात् गृहवास्तुर्गृहभूमिः। दृष्टिपातो गवाक्षः। बृहस्पतिः।

वर्चःस्थानं वह्निचयं गर्तोच्छिष्टानुसेचनं।
अत्यारात्परकुड्यस्य कर्तव्यं न कदाचन ॥

वर्चःस्थानं मूत्रपरीषोत्सर्गस्थानं। वह्निचयमग्निस्थानं क्वचिद्वह्निस्थानमिति पाठः स तु सुगमः। अत्यारादतिसमीपे। कात्यायनः।

विण्मूत्रोदकचक्रं च वह्निश्वभ्रनिवेशनं।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥

चक्रं तैलादियंत्रं अरत्निर्निष्कनिष्ठमुष्टिहस्तः। बृहस्पतिः।

यांत्यायांति जना येन पशवश्चानिवारिताः।
तदुच्यते संशरणं न रोद्धव्यं तु केनचित् ॥

नारदः।

अवस्करस्थलश्वभ्रभ्रमस्यन्दनिकादिभिः।
चतुष्पथेष्ववस्थानं रथ्यामार्गं न रोधयेत् ॥

अवस्करो विष्ठागृहादिशोधनार्थं पांशुनिचय इति हरिहरादयः। स्थलं वेदिका श्वभ्रो गर्तः भ्रमो जलनिर्ग-

ममार्गः। स्यन्दनिका पटलप्रांतः। आदिशब्देनान्यदपि तादृशं ग्राह्यं। रथ्यामार्गो राजमार्गः रथ्या चत्वर इति कल्पतरुः। कात्यायनः।

सर्वे जनपदा येन प्रयांति सचतुष्पदाः।
अनिरुद्धा यथाकामं राजमार्गः स उच्यते॥
न तत्र रोधयेत्किंचिन्नोपहन्याच्च केनचित्।
गुर्वाचार्यनृपादीनां मार्गादानाच्च दण्डभाक्॥
यस्तत्र संकरश्वभ्रान्वृक्षारोपणमेव च।
कामात्पुरीषं कुर्याच्च तस्य दण्डस्तु मापकः॥

तत्र मार्गे संकरोऽवस्करः इदं सकृद्विषयं। अतो वक्ष्यमाणेन न विरोधः। मनुः।

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि।
स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत्॥
आपद्गतस्तथा वृद्धो गुर्विणी बाल एव वा।
परिभाषणमर्हंति तच्चाशोध्यमिति स्थितिः॥

अत्र कार्षापणद्वयदण्डविधानं असकृदनतिशयितमलत्यागे बोध्यं। परिभाषणं दण्डशून्यं पुनरेवं माकार्षीरित्यादिवचनं। अशोध्यमापद्गतादिनेति शेषः। तथा च विष्णुः॥ पथ्युद्यानोदकसमीपेष्वस्थिव्युत्करादित्यागे पणशतं तच्च प्रास्येत्॥ इति। व्युत्करोऽवकरः स च "सम्मार्जनी शोधनी स्यात् संकरोऽवकरस्तथा" इत्यमरोक्तो ग्राह्यः। पणशतं दण्ड इति शेषः। तन्मलं प्रास्येत् प्रोञ्छेत्। कात्यायनः।

तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसं ॥

उपसेकृद्वारा तदमेध्यं शोधयित्वा सार्द्धपणशतद्वयं दण्डयेत् । इदमत्यंताभ्यासे । कात्यायनः ।

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः ।
फलं पुष्पं च संजातं क्षेत्रस्वामिषु निर्दिशेत् ॥

द्वयोः क्षेत्रयोः स्वामिषु ।

अन्यक्षेत्रेषु जातानां शाखाश्चान्यत्र संस्थिताः ।
स्वामिनं तं विजानीयाद्यस्य क्षेत्रेषु संस्थिताः ॥

संस्थिता इत्यस्य शाखा इति शेषः । मनुः ।

गृहं तडागमारामं क्षेत्रं वा भीषया हरन् ।
शतानि पंच दण्ड्यः स्यादज्ञानाद्विगुणो दमः ॥

गृहादिस्वामिनो भयमुत्पाद्य तद्गृहादि हरन् पंचशतानि दण्ड्यः अज्ञानाद्धतया । तथा च स्वामित्वभ्रमेण तु हरन् द्विशतमित्यर्थः । वृद्धमनुः ।

स्थापितां चैव मर्यादामुभयोर्ग्रामयोस्तथा ।
अतिक्रामंति ये पापास्ते दण्ड्या द्विशतं दमं ॥

याज्ञवल्क्यः ।

मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।
क्षेत्रस्य हरणे दण्डो मध्यमोत्तमसाहसं ॥

मर्यादाचिन्हभूतवृक्षादिः तस्याः प्रभेदे विघाते सीमातिक्रमणे सीमार्थरथ्यादिभूग्रहणे उत्तमसाहसं क्षेत्रस्य हरणे बोध्यं । शंखलिखितौ ॥ क्षेत्रमर्यादाभेदे अष्टशतं सीमा-

तिक्रमे अष्टसहस्रं क्षेत्रोदकाहरणे अष्टशतं॥ अष्टभिरधिकंशतंसहस्रं चेत्यर्थः। इत्याहतुः। क्षेत्रोदकाहरणे सस्यनिर्वाहकोदकाहरणे॥

इति विद्वद्विरचिते विवादार्णवसेतुके।
सीमाविवादधर्मेण तरंगो द्वादशो गतः॥ १२॥

त्रयोदशस्तरंगः।

॥ अथ कृष्याकृष्टे॥

तत्र नारदः।

संवत्सरेणार्द्धखिलं खिलं स्याद्वत्सरैस्त्रिभिः।
पंचवर्षावसन्नं च क्षेत्रं स्यादटवीसमं॥

एकवर्षपतितमर्द्धखिलं त्रिवर्षपतितं खिलं पंचवर्षपतितमरण्यं भवतीत्यर्थः। बृहस्पतिः।

गृहीत्वा वाहयेत्काले वापगोपनसंग्रहान्।
अकुर्वन्स्वामिने दाप्यो मध्यं कृष्टसदं तु सः॥

गृहीत्वा क्षेत्रगोपनं रक्षणं संग्रहं सस्यसंचये अकुर्वन्क्षेत्रवापं सदः सस्यं मध्यं कृष्टसदं नात्युत्कृष्टं। व्यासः।

क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यान्न च कारयेत्।
स्वामिने स सदं दाप्यो राज्ञे दण्डं च तत्समं॥

यत्र क्षेत्रे यद्देयं तदाह स एव।

चिरावसन्ने दशमं कृष्यमाणे तथाष्टमं।
ससंस्कृतेषु षष्ठं स्यात् परिकल्प्य यथास्थिति॥

एतत्सर्वं मध्योत्पत्तेः बृहस्पतिवाक्यात्। तेनारण्यमये मध्योत्पत्तेर्दशमं खिले ऽष्टमं अर्द्धखिले षष्ठभागं क्षेत्रम-

गीकृत्य यातयित्वा क्षेत्रिणे अंगीकर्ता दाप्य इत्यर्थः। तत्र नारदः।

अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः।
क्षेत्रं चेत् विकृषेत्कश्चिदश्नुवीत स तत्फलं॥
विकृष्यमाणः क्षेत्रेषु क्षेत्रिकः पुनरावजेत्।
खिलोपचारं तत्सर्वं दत्वा क्षेत्रमवाप्नुयात्॥

अशक्तो द्रव्यरहितः नष्टस्त्यक्तदेशः क्षेत्रं खिलीभूतमित्यर्थः। स कर्षकः क्षेत्रिकः क्षेत्रस्वामी खिलोपचारं खिलकर्षणव्ययायासनिष्क्रयं। खिलोपचारदानाशक्तौ विशेषयति स एव।

तदष्टभागप्रभुता यावत्सप्त गताः समाः।
संप्राप्ते चाष्टमे वर्षे भुक्तं क्षेत्रं लभेत सः॥

यदि क्षेत्रपतिर्व्ययं न ददाति तदा कर्षकोऽष्टमं भागं तस्मै दद्यात्। यदि चाष्टमवर्षपर्य्यंतमपि क्षेत्रभोगं करोति तदा व्ययादाने ऽपि तत्सर्वं क्षेत्रमुत्पत्तिसहितं क्षेत्रपतेरेवेति हलायुधपारिजातौ। प्रकाशकारस्तु ततो ऽष्टमवर्षे स्वामिन इत्येवैतद्व्याख्यातवान्। कल्पतरौ कात्यायनः।

अशक्तितो न दद्याच्चेत् खिलार्थे यः कृतो व्ययः।
तदष्टभागहीनं तु कर्षकः फलमाप्नुयात्॥
वर्षाण्यष्टौ स भोक्ता स्यात् परतः स्वामिनो हि तत्।

क्षेत्रस्याष्टममंशं क्षेत्रस्वामी लभते सप्तांशान् कर्षकः। अष्टौ वर्षाण्येवं। ततस्तु खिलोपचारमदत्वैव स्वामी क्षेत्रं लभते। अतिकृच्छ्रकर्षणीयखिलविषयमेतत्। पूर्ववचनं

तु कृच्छ्रकर्षणीयखिलविषयमित्यतो न मिथो विरोधः। क्षेत्र्यननुमत्या क्षेत्रवापे मनुः।

ये क्षेत्रिणो बीजवंतः परक्षेत्रे प्रवापिणः।
ते वै सस्यस्य जातस्य न लभंते फलं क्वचित्॥

खिलातिरिक्तभूस्वामिनः षड्भागः करः "बलिषड्भागमादत्ते" इत्यादिवचनात्। एवं चानुमत्या दत्तं क्षेत्रादिकं कर्षकदोषं विना न दातुं शक्यतइति लक्ष्मीधरः।

अम्बुवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति।
क्षेत्रिकस्यैव तद्बीजं न बीजी लभते फलं॥

तथा

अबीजाविक्रये चैव बीजोत्कृष्टी तथैव च।
मर्यादाभेदकस्यैव प्राप्नुयाद्विकृतं वधं॥

॥ अथ सस्यरक्षा॥

तत्र याज्ञवल्क्यः।

ग्रामेच्छया गोप्रचारो भूमिराजवशेन च।
धनुःशतं परीणाहो ग्रामक्षेत्रांतरं भवेत्॥
द्वे शते खर्वटस्य स्यात् नगरस्य चतुःशतं।

ग्रामेच्छया ग्रामवासिजनेच्छया भूम्यल्पत्वमहत्त्वानुसारेण राजाज्ञया वा गोप्रचारो गोप्रचारणार्थं भूभागः कर्त्तव्य इति प्रथमप्रतीकार्थः। स चायं परीणाहो यो ग्रामक्षेत्रांतररूपो धनुःशतं ग्रामे धनुःशतद्वयं खर्वटक्षेत्रांतररूपः धनुःशतचतुष्टयं च नगरक्षेत्रांतररूपः धनुः चतुर्हस्तो दंडः। ग्रामनगरखर्वटलक्षणं च मार्कण्डेयपुराणे।

यथा

तथा शूद्रजनप्राया सुसमृद्धरुषीवला।
क्षेत्रोपभोगभूमध्ये वसतिर्ग्रामसंज्ञिता॥
सोत्सेधनं सप्रकारं सर्वतः खातकावृतं।
योजनार्द्धार्द्धविष्कंभमष्टभागोत्तरं पुरं॥
प्रागुदक्प्रवणं शस्तं शुद्धवंशविनिर्गमं।
तदर्द्धं तु तदा खेटं तस्मादूनं च खर्वटं॥

मनुः।

धनुःशतं परीणाहो ग्रामस्य स्यात्समंततः।
संपातास्तु त्रयो वापि त्रिगुणो नगरस्य तु॥
तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणां॥

संपाताः कांडपाताः कांडं शरः। तथा च शरत्रयेण यावती भूरतिक्रम्यते तावत्या भूमेः परीणाहत्वं लब्धमित्यर्थः। नगरस्य नगरकल्पस्य खेटस्येति यावत्। तत्र परीणाहाभ्यंतरे॥ विष्णुः। पथि ग्रामे विवीतांते न दोषो नावृते चाल्पकालं॥ भक्षणे सतीति शेषः। वर्त्मग्रामपरीणाहानां समीपे यत्क्षेत्रमनावृतं तस्याल्पकालं गवादिभक्षणे पालदोषो नास्ति बहुकालभक्षणे तत्रापि दोषः। आशयापराधात्। तथा च याज्ञवल्क्यः।

पथि ग्रामे विवीतांते क्षेत्रे दोषो न विद्यते।
अकामतः कामचारे चौरवद्दण्डमर्हति॥

विवीतं गवादिचरणस्थानं। मनुः।

क्षेत्रेष्वन्येषु च पशुः सपादं पणमर्हति ।
सर्वत्र तु स दोषः स्यात् क्षेत्रिकस्येति धारणा ॥

अन्येषु दूरस्थेषु वर्त्मग्रामांतरादिव्यतिरिक्तक्षेत्रेषु पशुर्भक्षयन्सपादं पणं दण्डमर्हति । अत्र पाल एव दण्ड्यः स्यादिति कुल्लूकभट्टः । इदं तु गवादिविशेषेतरपरं सामान्यविशेषन्यायात् । शंखलिखितौ ॥ रात्रौ चरंती गौः पंच माषान् दिवा त्रीन् मुहूर्ते माषं ग्रामे त्वदण्डः॥ चरंती यावत् सौहित्यं भक्षयन्ती तेन सौहित्यपर्यंतं भक्षयंती रात्रौ पंचमाषान् दिवा त्रीन्माषान् मुहूर्तं चरंती माषमेकं ग्रामे त्वदण्डः।ग्रामसीमाक्षेत्रादावदण्ड एवेत्यर्थः । माषोऽत्र कार्षापणस्य विंशतितमो भागः ।

माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु ।

इति नारदीयादिति चंडेश्वरः । माषश्चाप्यत्र राजतो ग्राह्यः ।

सौवर्णमाषकैः संख्या दण्डकर्मसु शस्यते ।
पशूनां सस्यचरणे माषैरन्यैस्तु राजतैः ॥

इति भाष्यकारवचनात्।दण्डस्तु तत्स्वामिन एव।पशोरदण्ड्यत्वात् । कात्यायनः ।

दापयेत् पणपादं गां द्वौ पादौ महिषीं तथा ।
तथाजाविकवत्सानां पादो दण्डः प्रकीर्तितः ॥

पणपादः कार्षापणचतुर्थपादः । इदं रात्रौ भक्षणे मंतव्यमिति रत्नाकरः । गौतमः। पंचमाषान् गवि षडुष्ट्रेषु। महिष्यां दश अजाविके द्वे ॥ शंखलिखितौ । सर्वेषा-

मेव वत्सानां माषः। सर्वेषां पशूनां वत्सः प्रथमवयाः। नारदः।

सन्नानां द्विगुणो दण्डो वसतां तु चतुर्गुणः।
प्रत्यक्षचारकाणां तु चौरदण्डः स्मृतो बुधैः॥

सन्नानां सस्यभक्षणेन श्रांतानां वसतां तत्रैव चरित्वा नीतरात्रिकाणां। तदेतदप्रत्यक्षचारकाभिप्रायं। परार्द्धस्य प्रत्यक्षचारकविषयत्वात्। क्षेत्रस्वामिनि पश्यत्येव बलेन चारकाः प्रत्यक्षचारकाः। नारदः।

समूलसस्यनाशे तु तत्स्वामी दंडमाप्नुयात्।
वधेन पालो मुच्येत दण्डं स्वामिनि पातयेत्॥

वधेनापराधानुरूपताडनेन। समूलसस्यनाशस्तु यस्मिन्नाशे पुनः प्ररोहो न भवति स द्रष्टव्यः। विष्णुः। "सर्वत्र स्वामिने विनष्टमूल्यं च" अस्यार्थः। विनष्टसस्यमूल्यं च दाप्य इति शेषः। नारदः।

गोभिश्च भक्षितं सस्यं यो नरः प्रतियाचते।
सामंतानुमतं देयं धान्यं यत्तत्र नाशितं॥
गवत्रं गोमिना देयं धान्यं वै कर्षकाय च।
एवं हि विनयः प्रोक्तो गवां सस्यावमर्द्दने॥

भक्षितं धान्यं क्षेत्रधान्यानुरूपं गवत्रं यवसं धान्यस्तम्ब इति यावत्। गोमी गोस्वामी तेन गवत्रं धान्यं वा क्षेत्रिणे देयमित्यर्थः। ग्राह्यमप्येतन्नरकभागित्वान्न ग्राह्यं। तथाच उशना।

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते।

पितरस्तस्य नाश्नन्ति नाश्नंति च दिवौकसः ॥

इति विवादचिन्तामणिः। चण्डेश्वरस्तु अनेकरिमन्नप-राधे दण्डदानादानविधायकवचनस्य दिनरात्रिकामाका-मकृतादिव्यवस्थया परस्परं विरोधः परिहरणीय इत्याह। अत्र पालकाधिष्ठानकाले पालकस्य दंडः नोचेत् स्वामि-न एव तत्रैव दिग्दर्शनं। विष्णुः।

अपालकायास्तस्वामी सपालायास्तु पालकः॥ इति।

॥ अथादण्ड्याः ॥

तत्र पालानुवृत्तौ नारदः।

राजपालगृहीतोऽपि वज्राशनिहतोऽपि वा।
अथ सर्पेण वा दष्टो वृक्षाद्वा पतितो भवेत्॥
व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमतां॥

याज्ञवल्क्यः।

महोक्षोत्सृष्टपशवः सूतिकागंतुकादयः।
पालो येषां न ते मोच्या दैवराजपरिप्लुताः॥

महोक्षो बीजसेक्ता वृषः। उत्सृष्टपशवो वृषोत्सर्गादि-ना त्यक्तपशवः। सूतिका नवप्रसूतिका अनिर्गतदशाहा। आगंतुकाः स्वयूथपरिभ्रष्टा ग्रामांतरादागता वा। आ-दिशब्देन हस्त्यादयोऽदण्ड्यतया ऋष्यंतरोक्ता ग्राह्याः। पालो येषां न विद्यते इति शेषः। तेनापालाः सेनादिद-र्शनात् गर्जनादिश्रवणाद्वा पलायिताः पशवो यदि क्षेत्रं चरंति तदा दोषो न भवतीत्यर्थः। एवमेव पारिजात-

विवादचिंतामणी। चंडेश्वरस्तु पालो येषां चेति पठित्वा येषां पालो विद्यते तेपि दैवराजपरिप्लुताः विद्युदादिभिर्दैवे राजपुरुषैर्वा पालदोषं विना विद्राविताश्चेपि मोच्या इत्यर्थ इत्याह। मनुः।

अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा।
सपालान् वा विपालान् वा अदण्ड्यान् मनुरब्रवीत्॥

वृषान् बीजसेकॄन् उत्सृष्टानामपि गवां गर्भार्थं गोकुले गोपैर्धारणात् सपालत्वसंभव इति कुल्लूकभट्टः। उशना।

अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः।
अदण्ड्याः काणकुब्जाश्च वृषश्च कृतलक्षणः॥
अदण्ड्यागंतुका गौश्च सूतिका व्यभिचारिणी।
अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च॥

अश्वा राजकीयास्तेषामेव प्रजापालकत्वादिति मिश्राः। "अश्वमहिष्योर्दश" इति गोभिलेन यदुक्तं तद्वणिगाद्यश्वादिविषयं। अत्र काणकुब्जशब्दाभ्यामत्यंतासमर्थ उच्यते। कृतलक्षणः त्रिशूलाद्यंकितः व्यभिचारिणी अत्यंतधावनशीला। पारिजातकृता तु अभिसारिणीति पठितं वृषस्यंतीति व्याख्यातं च। शंखलिखितौ॥ क्षुद्रपशवः सर्वथा अवश्याश्वतरगजवाजिनश्चादण्ड्याः। अवश्याः शीघ्रं निवारयितुमशक्याः। अश्वतरोऽश्वायां रासभाद्युत्पन्नः। तथा चानुशासनं।

गर्दभाद्वोटकी जातः स वै चाश्वतरो मतः।

इति पारिजातप्रकाशकाराभ्यां। अवश्या इत्यत्रावध्या इति पठित्वा अताड्या इति व्याख्यातं। कात्यायनः।

अधमोत्तममध्यानां पशूनां चैव ताडने।
स्वामी तु विपदेद्यत्र तत्र दण्डं प्रकल्पयेत्॥

ताडकस्येति शेषः। अस्यापवादमाह स एव।

क्षेत्रारामविवीतेषु गृहेषु पशुराजिषु।
ग्रहणं तत्प्रविष्टानां ताडनं च बृहस्पतिः॥

पशुराजिषु विकीर्णयवसस्थलेषु ग्रहणं बंधनं गृहादि-प्रविष्टेषु पशुषु ताडनवारणयोर्न दोष इति फलितं॥

इति विद्वद्भिरचिते विवादार्णवसेतुके।
त्रयोदशतरंगस्तु क्रुष्टाकुष्टादिना गतः॥ १३॥

---

अथ चतुर्दशस्तरंगः।

॥ अथ वाक्पारुष्यं॥

तत्राह मनुः

एषोऽखिलेनाभिहितो धर्मः सीमाविनिर्णयः।
अतः परं प्रवक्ष्यामि वाक्पारुष्यविनिर्णयं॥

नारदः।

देशजातिकुलादीनामाक्रोशन्यंकुसंयुतं।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते॥

आक्रोश आक्षेपः तत्र देशाक्षेपो यथा। गौडं प्रति कलहप्रिया गौडाः। जात्याक्रोशो यथा। अत्यंतलुब्धा ब्राह्मणाः। कुलाक्रोशो यथा। क्रूरचरिता वैश्वानराः। आदिपदाद्विद्यादिपरिग्रहः। न्यंकु अवद्यं ताभ्यां संयुतं

यत् प्रतिकूलार्थं वचस्तद्वाक्पारुष्यमिति सामान्यलक्षणं। मिताक्षराकारवाचस्पतिमिश्रादयो ऽप्येवं वर्णयंति। नारदः।

निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतं।
गौरवानुक्रमात्तेषां दण्डो ऽप्युक्तः क्रमाद्गुरुः॥

गौरवानुक्रमात् यथोत्तरं गौरवात् तेषां वाक्पारुष्याणां। निष्ठुरादीनां लक्षणमाह स एव।

साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यंकुसंज्ञितं।
तापनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः॥

कात्यायनोऽपि।

यत्त्वसत्संज्ञितैरंगैः परमाक्षिपति क्वचित्।
अभूतैरथ भूतैर्वा निष्ठुरा वाक्स्मृता तु सा॥
न्यक्कारगूहनं वाचा क्रोधात्तु कुरुते यदा।
वृत्तदेशकुलानां च अश्लीला सा बुधैः स्मृता॥
महापातकयोक्त्री च रागद्वेषकरी च या।
जातिभ्रंशकरी या च तीव्रा सा कथिता तु वाक्॥

न्यक्कारगूहनं मेहनादिनिकृष्टांगप्रकटीकरणेन तिरस्करणं। बृहस्पतिः।

अप्रियोक्तिस्ताडनं च पारुष्यं द्विविधं स्मृतं।
एकैकं तु त्रिधा भिन्नं दण्डश्चोक्तस्त्रिलक्षणः॥
देशकालकुलादीनां क्षेपः पापनियोजनं।
दिव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते॥
भगिनीमातृसंबंधमुपपातकशंसनं।

पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयकथनं महापातकदूषणं ।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनं ॥

द्रव्यं विना द्रव्यशब्दोयमभिधेयपरस्तेनाभिधेयं पदार्थं विना असत्यमिति फलितं । एतच्च सर्वत्रान्वयि । महापातकपदं अनुपातकोपपातकयोरप्युपलक्षणं । अन्यथा तच्छंसनस्य कस्याप्यनंतर्भावात्तच्छंसकस्यादण्ड्यत्वापत्तेः । तेनासत्यं पापाभिधानं प्रथमं असत्यमनुपातकाभिधानं द्वितीयं असत्यं महापातकाद्यभिशंसनं उत्तमं । वाक्पारुष्यं भगिनीत्यादेस्तव भगिनी तव माता मया ग्राह्येत्यभिकीर्तनमित्यर्थः । तत्रातिपातकमाह । विष्णुः ॥ मातृगमनं दुहितृगमनं स्नुषागमनं ॥ महापातकमाह । मनुः ।

ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ।
महांति पातकान्याहुः संसर्गश्चापि तैः सह ॥

ब्राह्मणप्राणवियोगफलको व्यापारो ब्रह्महत्या तथा निषिद्धसुरायाः पानं ब्राह्मणस्वामिकाशीतिरक्तिकापरिमितस्वर्णस्तेयं गुरुभार्यागमनं एतैश्च सह संसर्गी संवत्सरेण पततीति वक्ष्यमाणप्रकारेण संसर्ग इत्येतानि महापातकान्याहुरिति कुल्लूकभट्टः । मनुः ।

संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ॥

पतितेन सह संसर्गमाचरन्नेकयानगमनैकासनोपवे-

शनैकपंक्तिभोजनरूपात्संसर्गात् संवत्सरेण पतति न तु याजनाध्यापनायौनात्संवत्सरेण पतति किंतु सद्य एवेत्यर्थः । अध्यापनमत्रोपनयनपूर्वकं सावित्रीपाठनं । याजनादीनां सद्यःपातहेतुत्वमाह देवलः ।

याजनं योनिसंबंधं स्वाध्यायं सहभोजनं ।
कृत्वा सद्यः पतत्येव पतितेन सहाचरन् ॥
याजनाध्यापनायौनात्सद्यो न शयनासनात् ।

अनुपातकमाह मनुः ।

अनृतं च समुत्कर्षे राजगामि च पैशुनं ।
गुरोश्चालीकनिर्बंधः समानि ब्रह्महत्यया ॥
ब्रह्मोज्झिता वेदनिंदा कौटसाक्ष्यं सुहृद्वधः ।
गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट् ॥
निक्षेपस्याभिहरणं नराश्वरजतस्य च ।
भूमिवस्त्रमणीना च स्वर्णस्तेयसमं स्मृतम् ॥
रेतःसेकः स्वयोन्यासु कुमारीष्वंत्यजासु च ।
सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥

एषामर्थः । जात्युत्कर्षनिमित्तं उत्कर्षभाषणं । यथा ब्राह्मणोऽहमित्यब्राह्मणो वदति राजनि वा स्तेनादीनां परेषां मारणफलकं दोषाभिधानं गुरोश्चानृताभिशंसनं । तथा च गौतमः । "गुरोरनृताभिशंसनम्" इति महापातकसमानीति एतानि ब्रह्महत्यासमानि अधीतवेदस्यानभ्यासेन विस्मरणं असच्छास्त्राश्रयणेन वेदकुत्सनं साक्ष्ये मृषाभिधानं मित्रस्य वधो निषिद्धस्य लशुनादेर्भक्षणं अनाद्यस्य

पुरीषादेरदनं । मेधातिथिस्तु न भोक्ष्ये इति संकल्प्य य-न्द्रक्ष्यते तदनाद्यमिति व्याचष्टे। एतानि षट् सुरापान-तुल्यानि । ब्राह्मणसुवर्णव्यतिरिक्तनिक्षेपस्यापहरणं म-नुष्यतुरगरूप्यभूमिमणीनां हरणं सुवर्णस्तेयतुल्यं सोद-र्याभगिनी कुमारीचाण्डालीसखिभार्यासु पुत्रभार्यासु यो रेतःसेकस्तं गुरुभार्यागमनेन समानमाहुः ॥

अथोपपातकमाह मनुः ।

गोवधो ऽयाज्यसंयाज्यं पारदार्य्यात्मविक्रयौ ।
गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥
परिवित्तितानुजेनूढे परिवेदनमेव च ।
तयोर्दानं च कन्यायास्तयोरेव च याजनं ॥
कन्याया दूषणं चैव वार्द्धुषित्वं व्रतच्युतिः ।
तडागारामदाराणामपत्यस्य च विक्रयः ॥
व्रात्यता बांधवत्यागो भृताध्यापनमेव च ।
भृताच्चाध्ययनादानमपण्यानां च विक्रयः ॥
सर्वाकरेष्वधीकारो महायंत्रप्रवर्त्तनं ।
हिंसौषधीनां स्त्र्याजीवो ऽभिचारो मूलकर्म च ॥
इंधनार्थमशुष्काणां द्रुमाणामवपातनं ।
आत्मार्थं च क्रियारंभो निंदितान्नादनं तथा ॥
अनाहिताग्निता स्तेयमृणानां चानपक्रिया ।
असच्छास्त्राभिगमनं कौशीलव्यस्य च क्रिया ॥
धान्यकूप्यपशुस्तेयं मद्यपस्त्रीनिषेवणं ।

१ ब्राह्मणस्वामिकसुवर्णनिक्षेपहरणे तु महापातकस्मरणात्तद्व्यतिरिक्तोक्तिः

स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकं ॥

- एषामर्थः। गोहननं जातिकर्मदुष्टानां पातनं परपत्नीगमनं आत्मविक्रयो मातृपितृगुरूणां च शुश्रूषायकरणं सर्वदा ब्रह्मयज्ञत्यागः वेदविस्मरणस्य ब्रह्मोज्झितेत्युक्तत्वात्। अग्नेश्च श्रौतस्य स्मार्तस्य च स्वाध्यायस्य च त्यागः सुतस्य संस्कारभरणाद्यकरणं च कनीयसा आदौ विवाहे कृते ज्येष्ठस्य परिवित्तित्वं प्रागुक्तं कनिष्ठस्य परिवेत्तृत्वं तयोश्च कन्यादानं तयोरेव च विवाहहोमाद्यार्त्विज्यं कन्याया मैथुनवर्जमंगुलीप्रक्षेपादिना दूषणं रेतःसेकपर्य्यंतमैथुने तु रेतःसेकः स्वयोन्यासु कुमारीष्वित्युक्तत्वात्। प्रतिपिद्धवृद्धिजीवनं ब्रह्मचारिणो मैथुनं तडागोद्यानभार्यापत्यविक्रयः यथाकालमनुपनयनं बांधवानां पितृव्यादीनां त्यागः प्रतिनियतवेतनग्रहणपूर्वकमध्यापनं प्रतिनियतवेतनप्रदानपूर्वकमध्ययनं च अविक्रेयाणां विक्रयः सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञया अधिकारः। महतामुदकप्रतिबंधहेतूनां सेतुबंधादीनां प्रवर्त्तनं ओषधीनामार्द्राणां हिंसनं भार्यादिस्त्रीणां वेश्यात्वं कृत्वा तदुपजीवनं श्येनादियज्ञेनानपराद्धस्य मारणं मंत्रौषधादिना वशीकरणं पाकादिदृष्टप्रयोजनार्थमार्द्रवृक्षच्छेदः अनातुरस्य देवपित्राद्युद्देशमंतरेण पाकाद्यनुष्ठानं निंदितस्यान्नस्य लशुनादेरसकृदनिच्छया भक्षणं बुद्धिपूर्वकाभ्यासभक्षणे पुनः 'गर्हितानाद्ययोर्जग्धिः' इत्युक्तत्वात्। सत्यधिकारे अग्न्यनाधाने सुवर्णादन्यस्य सारद्र-

व्यस्यापहरणं ऋणानां 'त्रिभिर्ऋणैर्ऋणवानि'ति श्रुत्युक्तानामनपाकरणं श्रुतिस्मृतिविरुद्धशास्त्रशिक्षणं नृत्यगीतवादनोपसेवनं धान्यस्य ताम्रलोहादेः पशूनां च चौर्यं द्विजातीनां पीतमद्यायाः स्त्रिया गमनं स्त्रीशूद्रवैश्यक्षत्रियहननं अदृष्टार्थकर्माभावबुद्धिः एतत् प्रत्येकमुपपातकं बांधवत्याग इत्यनेनैव मात्रादीनां त्यागप्राप्तौ पृथग्वचनं निंदार्थं पितृव्यादिबांधवत्यागेनावश्यमेतदेव प्रायश्चित्तं भवति किंतु मात्रादित्यागप्रायश्चितान्यूनमपि भवतीति कुल्लूकभट्टः ॥ ७ ॥ ७ ॥

जातिभ्रंशकरमाह मनुः ।

ब्राह्मणस्य रुजः कृत्यंघ्रातिरघ्रेयमद्ययोः ।
जैह्मं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतं ॥

ब्राह्मणस्य दंडहस्तादिना पिंडक्रिया यदतिशयदुर्गंधितयाऽघ्रेयं लशुनपुरीषादि तस्य मद्यस्य च घ्राणं कुटिलत्वं पुंसि च मुखादौ मैथुनमित्येतत् प्रत्येकं जातिभ्रंशकरं स्मृतमित्यर्थः ॥ ७ ॥ ७ ॥ ७ ॥

संकरीकारणमाह मनुः ।

खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा ।
संकरीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥

गर्दभतुरगोष्ट्रहरिणहस्तिच्छागमेषमत्स्यसर्पमाहिषाणां प्रत्येकं वधः संकरीकरणं ज्ञातव्यमित्यर्थः ॥ अपात्रीकरणमाह मनुः ।

निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनं ।

अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणं ॥

अप्रतिग्राह्यधनेभ्यः प्रतिग्रहो वाणिज्यं शूद्रस्य परिचर्याऽनृताभिधानमित्येतत् प्रत्येकमपात्रीकरणं ज्ञेयमित्यर्थः ॥ मलावहमाह स एव।

कृमिकीटवयोहत्यामद्यानुगतभोजनं।

फलैधःकुसुमस्तेयमधैर्यं च मलावहं ॥

कृमयः क्षुद्रजंतवः तेभ्य ईषत्स्थूलाः कीटास्तेषां पक्षिणां च हननं मद्यानुगतं यद्भोज्यमपि शाका एकत्र पिटकादौ कृत्वा मद्येन सहानीतं तस्य भोजनमिति कुल्लूकभट्टः। मेधातिथिस्तु मद्यानुगतं मद्यसंस्पृष्टमित्याह। तच्चिंत्यं तत्र प्रायश्चित्तगौरवात्। फलकाष्ठपुष्पाणां च चौर्यं स्वल्पेऽप्यपचये ऽत्यंतवैक्लव्यमित्येतत् प्रत्येकं मलावहमित्यर्थः ॥ ७ ॥ ७ ॥ ७ ॥ ७

प्रकीर्णमाह विष्णुः ॥ यदनुक्तं तत्प्रकीर्णकं ॥ अनुक्तं अनुक्तनिष्कृतिकं पापमित्यर्थः। बृहस्पतिः।

समानयोः समो दण्डो न्यूनस्य द्विगुणश्च सः।

उत्तमस्यार्द्धिकः प्रोक्तो वाक्पारुष्ये परस्परं ॥

परस्परं वाक्पारुष्ये कृते आक्षेपकस्य दण्डः यथसावाक्षेप्येण समो जात्यादिभिस्तदा समो दण्डः स न्यूनस्तदा तस्योक्तो द्विगुणः उत्कृष्टस्तदार्द्धिको दण्ड इत्यर्थः। याज्ञवल्क्यः।

अर्द्धो ऽधमेषु द्विगुणः परस्त्रीपूत्तमेषु च।

---

१ स आक्षेपक., न्यूनआक्षेप्यजात्यापेक्षया.

अधमेषु च आक्षेप्त्रपेक्षया न्यूनशीलगुणेषु आक्षेप्तुर-धिकगुणस्यार्द्धो दण्डः परस्त्रीषु परभार्यासु उत्तमेषु आ-क्षेप्त्रपेक्षया अधिकगुणेषु अर्द्धत्वं द्विगुणत्वं चापराधानु-रूपं दंडस्य। एवमेव वाचस्पतिमिश्राः। कात्यायनोश-नसौ।

मोहात्प्रमादात्संहर्षात् प्रीत्या चोक्तमपैति यत्।
नाहमेवं पुनर्वक्ष्ये दण्डार्द्धं तस्य कल्पयेत्॥

याज्ञवल्क्यः।

सत्यासत्यान्यथास्तोत्रैर्न्यूनांगेंद्रियरोगिणां।
क्षेपं करोति चेद्दण्ड्यः पणानर्द्धत्रयोदश॥

न्यूनांगाः करादिहीना न्यूनेन्द्रिया नेत्रादिहीनाः। रोगिणः कुष्ठिप्रभृतयः तेषां सत्येनासत्येनान्यथास्तोत्रेण वा क्षेपमाक्रोशं करोति चेत् पणानर्द्धत्रयोदश दण्ड्यः। सत्यं च नेत्रशून्यस्त्वमसीति असत्यं इन्द्रियवति इंद्रियशून्यस्त्वमसीति। अन्यथा स्तोत्रं अन्ध एव चक्षुष्मानतिशयेनासीति वचनं। प्रथमवाक्पारुष्ये समजातिगुणविषयमेतत्। अतद्विषय एव बृहस्पतिः।

समजातिगुणानां च वाक्पारुष्ये परस्परं।
विनयोऽभिहितः शास्त्रे पणा अर्द्धत्रयोदश॥

विष्णुः॥ सवर्णाक्रोशने द्वादशपणा दण्ड्यः। हीनवर्णाक्रोशने षट्काणखंजादीनां॥ तथा याज्ञवल्क्यः।

अभिगंतास्मि भगिनीं मातरं वा तवेति ह।
शपन्तं दापयेद्राजा पंचविंशतिकं दमं॥

व्यासः।

पापोपपापवक्तारो महापातकशंसकाः।
आद्यमध्योत्तमान्दण्डान् दद्युरेते यथाक्रमं॥

अत्र महापातकपदं अतिपातकपरमिति न परेण विरोधः। एतेषां पापादिशंसकानां यथाक्रमं प्रथममध्यमोत्तमसाहसो दण्ड इत्यर्थः। याज्ञवल्क्यः।

पतनीये कृते क्षेपे दण्डो मध्यमसाहसं।
उपपातकयुक्ते तु दाप्यः प्रथमसाहसं॥

पतनीये कृते पातित्यहेतुभिर्ब्रह्महत्यादिभिः कृते आक्रोशे इति चंडेश्वरः। मनुः।

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति।
वैश्यो ह्यर्द्धशतं द्वेधा शूद्रस्तु वधमर्हति॥

आक्रुश्य मध्यमेन वाक्पारुष्येणेति शेष इति पारिजातः। द्वेधेत्याक्रोशगौरवापेक्षया। वधस्ताडनजिह्वाच्छेदनादिरूपः। अत्रैव चण्डेश्वरस्वरसः। मनुः।

विप्रः पंचाशतं दण्ड्यः क्षत्रियस्याभिशंसने।
वैश्ये स्यादर्द्धपंचाशच्छूद्रे द्वादशको दमः॥

अभिशंसनमाक्रोशः वैश्ये शूद्रे चाभिशंसतोपि इति विवादचिंतामणिः। पंचाशतमित्युत्तमे अपरौ स्वपरयोरिति मेधातिथिः। बृहस्पतिः।

विप्रः शतार्द्धं दण्ड्यस्तु क्षत्रियस्याभिशंसने।
वैश्यस्य चार्द्धपंचाशच्छूद्रस्यार्द्धत्रयोदश॥
वैश्यस्तु क्षत्रियाक्षेपे दंडनीयः शतं भवेत्।

तदर्द्धं क्षत्रियो वैश्यं क्षिपन् विनयमर्हति ॥
शूद्राक्षेपे क्षत्रियस्य पणविंशतिको दमः ।

शूद्र इत्यनुवृत्तौ बृहस्पतिः

धर्मोपदेशकर्ता च वेदोदाहरणान्वितः ।
आक्रोशकश्च विप्राणां जिह्वाच्छेदेन दण्ड्यते ॥

मनुः ।

ब्राह्मणक्षत्रियाभ्यां तु दण्डः कार्यो विजानता ।
ब्राह्मणे साहसः पूर्वः क्षत्रिये चैव मध्यमः ॥

इदं ब्राह्मणक्षत्रिययोः परस्परं पतनीयाक्रोशे। विट्शूद्रयोरेवमेव । मनुनारदौ ।

एकजातिर्द्विजातिं तु वाचा दारुणयाक्षिपन् ।
जिह्वायाश्छेदमाप्नोति जघन्यप्रभवो हि सः ॥
नामजातिग्रहं तेषामतिद्रोहेण कुर्वतः ।
निक्षेप्योऽयोमयः शंकुर्ज्वलन्नास्ये दशांगुलः ॥

एकजातिरिह शूद्रः उपनयनाभावात् । द्विजातिं ब्राह्मणादित्रयं दारुणया पातित्याद्यभिशंसनरूपयेति कल्पतरुः । जघन्यप्रभवः श्रुत्या पद्भ्यामुत्पन्नत्वेन बोधितत्वात् । एतेन संकरजातानामपि द्विजातिं ब्राह्मणादित्रयं प्रति दारुणाक्षेपे ऽयं दण्डः तेषामपि जघन्यजातित्वादिति चण्डेश्वरादयः । अयोमयः लोहमयः शंकुः कीलकः । द्विजातीनां कृते गोतमः ॥ शूद्रो द्विजातीनभिसंधाय निहत्य च वाक्चण्डपारुष्याभ्यामंगमोच्यो येनापहन्यात् ॥

तेनाक्रोशे जिह्वाछेदः अंगताडने सत्यंगमोच्यः येनां-

गेन् ताडयेत् तस्य छेदः। मनुः।

श्रुतं देशं च जातिं च कर्म शारीरमेव।
वितथेन ब्रुवन् दर्पाद्दाप्यः स्याद्विशतं दमम्॥

कर्म तपश्चर्यादिरूपं शारीरं शरीरावयवं वितथेनासत्येन। तेन यत्र श्रुतदेशजातितपश्चर्य्याशरीरावयवं विकृत्य दर्पादसत्यं वदति तत्र द्विशतं दण्ड्यः। उदाहरणान्येषां यथा। नानेन वेदः श्रुतः नास्यार्यावर्तो देशः नायं विप्रः नानेन तपः कृतं नायंदुश्चर्मेत्यादि। दर्पःस्वगुणदार्ढ्यज्ञानेन परावज्ञानं। नारदः।

अवक्रम्य च राजानं धर्मार्थे च व्यवस्थितं।
जिव्हाच्छेदाद्भवेच्छुद्धिः सर्वस्वहरणेन वा॥

याज्ञवल्क्यः।

राज्ञो ऽनिष्टप्रवक्तारं तस्यैवाक्रोशकं तथा।
तन्मंत्रस्य च भेत्तारं छित्वा जिव्हां प्रवासयेत्॥

अनिष्टं अनिष्टस्तोत्रादि मंत्रः स्वराष्ट्रवृद्ध्यादिहेतुर्न्यापारचिंता। नारदः।

लोकेऽस्मिन्द्वाववक्तव्यावबध्यौ च प्रकीर्तितौ।
ब्राह्मणश्चैव राजा च तौ हीदं बिभृतो जगत्॥
पतितं पतितेत्युक्त्वा चौरं चौरेति वा पुनः।
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेत्॥

वचनात् शास्त्ररूपात्। अत्रापवादमाह कात्यायनः।

यत्र स्यात्परिहारार्थं पतितस्तेन कीर्तितः।
वचनात्तत्र तत्स्यात्तु दोषो यत्र विभावयेत्॥

यत्र परिहारार्थं पतितादिसंसर्गपरिहारार्थं पातित्यादि कीर्तितमिति विभावयति तत्र न दोष इत्यर्थः। याज्ञवल्क्यः।

त्रैविद्यनृपदेशानां क्षेपे उत्तमसाहसः।
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः॥

त्रैविद्यो वेदत्रयसम्पन्नः नृपः प्रजापालकः जातयो ब्राह्मणादयः तेषां पूगः संघः। मनुः।

मातरं पितरं जायां भ्रातरं तनयं गुरुं।
आक्षारयञ्छतं दण्ड्यः पंथानं चाददद्गुरोः॥

आक्षारयन् वाक्पारुष्यविषयीकुर्वन् दण्ड्यः इत्यनुवृत्तौ विष्णुः॥ गुरूनाक्षारयन्कार्षापणशतं॥ बृहस्पतिः।

क्षिपञ्छस्त्रादिकं दद्यात्पंचाशत्पणिकं दमं।

उशना।

यत्र नोक्तो दमः सर्वैरानंत्यात्सुमहात्मभिः।
तत्र कार्यं परिज्ञाय कर्त्तव्यं दण्डधारणं॥
इति विद्वद्भिरचिते विवादार्णवसेतुके।
वाक्पारुष्यतरंगस्तु चतुर्दश उदाहृतः॥ १४

---

पंचदशोर्मिः

## ॥ अथ दण्डपारुष्यं ॥

तत्र मनुः

एष दण्डविधिः प्रोक्तो वाक्पारुष्यस्य तत्वतः।
अत ऊर्ध्वं प्रवक्ष्यामि दण्डपारुष्यनिर्णयं॥

दण्डपारुष्यलक्षणमाह बृहस्पतिः।

हस्तपाषाणलगुडैर्भस्मकर्दमपांशुभिः।

आयुधैश्च प्रहरणं दंडपारुष्यमुच्यते ॥

नारदोपि ।

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चावघातो दंडपारुष्यमुच्यते ॥
तस्यापि दृष्टं त्रैविध्यं मृदुमध्योत्तमक्रमात् ।
अवगूहनानिःशंकपातनक्षतदर्शनैः ।

अभिद्रोहो हिंसा । अवगूहनं शस्त्रायुधमनं । निःशंकपातनं निर्दयं शस्त्रादिपातनं । आरुधिरक्षतदर्शनपदेन विवक्षितमुत्तमं । बृहस्पतिः ।

भस्मादीनां क्षेपणं च ताडनं च करादिना ।
प्रथमं दंडपारुष्यं दमः कार्योत्र माषिकः ॥
एष दण्डः समेपूक्तः परस्त्रीष्वधिकेपु च ।
द्विगुणस्त्रिगुणो ज्ञेयः प्रधानापेक्षया बुधैः ॥

ताडनमत्रोद्यमनमात्रं । माषिकः राजतमापपरिमितः । समेपु जात्यादिभिस्तुल्येषु त्रिगुण इति जातिगुणाभ्यामधिके बोद्धव्यं । स्पर्शे आह याज्ञवल्क्यः ।

भस्मपंकरजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः स्मृतः ।
समेष्वेव परस्त्रीपु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्द्धदमो मोहमदादिभिरदण्डनं ।

अमेध्यं अश्रुश्लेष्मनखकर्णविट्दूषिकाभुक्तोच्छिष्टादि । पार्ष्णिश्चरणस्य पश्चिमो भागः । चरण एव तात्पर्यमित्यपि कश्चित् । निष्ठ्यूतं मुखनिःसृतं जलं एतैः स्पर्शने प्रागुक्ता-

दशपणात् द्विगुणो दण्डः। परस्त्रीपूत्तमेषु च द्विगुण इति-योजना। हीनेषु अपकृष्टेषु मोहश्चित्तवैकल्यं मदो मद्यादिजनिता विकृतावस्था। आदिपदादुन्मादादेः संग्रहः। छर्यादौ विशेषयति कात्यायनः।

छर्दिमूत्रपुरीषाद्यैराये स स्याच्चतुर्गुणः।
षड्गुणः कायमध्ये तु मूर्ध्नि त्वष्टगुणः स्मृतः॥

आदिपदात् वसाशुक्रादयो ग्राह्याः आये शिरोव्यतिरिक्तांगे। एवमेव रत्नाकरः। अधःकाये इति मिश्राः। चतुर्गुणः प्रागुक्तपणात्। एवं षड्गुणादावपि कात्यायनः।

उद्गूरणे तु हस्तस्य कार्यो द्वादशको दमः।
स एव द्विगुणः प्रोक्तः पतनेषु द्विजातिषु।

उद्गूरणे हस्तस्य प्रहारार्थं उद्यमने पातने। हस्तस्यैव समे त्विदमिति विवादचिंतामणिः। रत्नाकरे तु द्विजातिष्वित्यत्र सजातिष्विति पाठः। तत्र व्यक्त एवार्थः। बृहस्पतिः।

उद्यतेऽश्मशिलाकाष्ठे कर्तव्यः प्रथमो दमः।
परस्परं हस्तपाते दशविंशतिकस्तथा।

अयं चोभयोरेव समानजात्योर्दण्ड इति मंतव्यं। दण्ड पादेन इत्यनुवृत्तौ विष्णुः। हस्तेनोद्गूरयित्वा दश कार्षापणान् विंशतिं। काष्ठेन प्रथमसाहसं शस्त्रेणोत्तमसाहसं। उत्तमंप्रति अधमश्च शस्त्रमुद्यमयति तदा सहस्रं प-...दण्ड्यः। याज्ञवल्क्यः।

१ रायाद्यः सचतुर्गुणः इत्यपि पाठः

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ।
परस्परस्य सर्वेषां शस्त्रे मध्यमसाहसं॥

एतत्तु समानजातीयानामेव मंतव्यं। असमानजातीयानां तु दण्डांतरस्य श्रवणात्। पणानुवृत्तौ शंखलिखितौ॥ प्रहारोद्यमे षट्पंचाशत् निपातने द्विगुणं॥ प्रह्रियतेऽनेनेति प्रहारो दण्डादिः षट्पंचाशत् षडधिकपंचाशत् इदं चोत्तमवर्णेनाधमवर्णस्य दण्डो यमने बोद्धव्यः। मनुः।

पाणिमुद्यम्य दण्डं तु पाणिच्छेदनमर्हति।
पादेन प्रहरन् कोपात् पादच्छेदनमर्हति॥
सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टतः।
कट्यां कृतांको निर्वास्यः स्फिचौ वास्यावकर्तयेत्॥
अवनिष्ठीवतो दर्पाद्वावोष्ठौ च्छेदयेन्नृपः।
अवमूत्रयतो मेढ्रमवशब्दयतो गुदं॥
केशेषु गृह्णतो हस्तौ च्छेदयेदविचारयन्।
पादयोर्दाढिकायां च ग्रीवायां वृषणेषु च॥

ब्राह्मणविषये शूद्रस्य दण्डोयं। व्यक्तमाह नारदः।

येनांगेनावरो वर्णो ब्राह्मणस्यापराध्नुयात्।
तदंगं तस्य च्छेतव्यमेवं शुद्धिमवाप्नुयात्॥

मनुः।

'येन केनचिदंगेन हिंस्याच्छ्रेयांसमंत्यजः।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनं॥

---

छेच्छ्रेष्ठं इत्यपि पाठः

मनुष्याणां पशूनां च दुःखाय प्रहृते सति ।
यथा यथा महद्दुःखं दण्डं कुर्यात्तथा तथा ॥
दुःखाय दुःखोदयमभिसंधाय तेन प्रमादकृते च न दोष इति दर्शितं । नारदः ।
येनांगेनावरो वर्णो ब्राह्मणस्यापराध्नुयात् ।
तदंगं तस्य च्छेतव्यमेवं शुद्धिमवाप्नुयात् ॥
अवरो हीनवर्णः । तथा ।
राजनि प्रहरेद्यस्तु कृतागस्यपि दुर्मतिः ।
शूल्यं तमग्नौ विपचेद्ब्रह्महत्याशताधिकं ॥
य इति ब्राह्मणेतरपरं ।
न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम् ।
इति विशेषनिषेधात् । तथा चायमर्थः । सापराधेपि राज्ञि कृतप्रहारं ब्राह्मणातिरिक्तं शूलमारोप्याग्नौ पचेदिति मिश्राः । चण्डेश्वरस्तु शूलमारोप्य यत् संस्क्रियते तत् शूल्यं तेन प्रथमतः शूलभेदनेन पीडां विधायाग्निपाकेन पीडाकर्त्तव्येत्यर्थः इत्याह । मनुः ।
येन केनचिदंगेन हिंस्याच्छ्रेयांसमंत्यजः ।
छेतव्यं तत्तदेवास्य तन्मनोरनुशासनं ॥
हिंस्यात्प्रहरेत् श्रेयांसं त्रैवर्णिकं अंत्यजः शूद्रः । शूद्रस्य इत्यनुवृत्तावापस्तम्बः । वाचि पथि शय्यायामासने च समीभवतो दंडताडनम् । वाचि युगपन्नादः पथि तुल्यवद्गमनं शय्यासनयोरुपवेशनं साम्यम् । कात्यायनः ।
वाक्पारुष्ये यथैवोक्ताः प्रतिलोमानुलोमतः ।

तथैव दण्डपारुष्ये पात्या दण्डा यथाक्रमम् ॥

बृहस्पतिः ।

अंगावपीडने चैव भेदने छेदने तथा ।
समुत्थानव्ययं दाप्यः कलहापहृतं तथा ॥

समुत्थानव्ययं भग्नसंघटनार्थं भेषजपथ्यादिजनकधनव्ययं । याज्ञवल्क्यः ।

एकं घ्नतां बहूनां च यथोक्ताद्द्विगुणो दमः ।
कलहापहृतं देयं दण्डश्च द्विगुणः स्मृतः ॥

द्विगुणो दमः प्रत्येकं कलहापहृतं देयं कलहे यथेनापहृतं लुण्ठितमिति यावत् । मनुः ।

भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥
पृष्ठतस्तु शरीरस्य नोत्तमांगे कदाचन ।
अतोऽन्यथा तु प्रहरन्प्राप्तः स्याच्चौरकिल्बिषं ॥

भ्राता कनिष्ठः पृष्ठतः नोत्तमांगे न मर्मणि न्यायसाम्यादिति रत्नाकरः । यमः ।

भार्या पुत्रश्च दासश्च दासी शिष्यश्च पंचमः ।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥
अधस्तात्तु प्रहर्तव्या नोत्तमांगे कथंचन ।
अतो ऽन्यथा प्रवृत्तस्तु यथोक्तं दण्डमर्हति ॥

शिष्यानुवृत्तावापस्तम्बः ॥ अपराधेषु चैवं सततमुपालभेतातित्रासमुपवासमुदकोपस्पर्शनमिति दण्डाः यथामात्रमा निवृत्तेः ॥ अस्यार्थः । उपालभेत रूक्षो-

किंभिस्तिरस्कुर्यात् अतित्रासमतिभीत्युत्पादनं उदको-
पस्पर्शनं अतिशयितशीतकाले पानीयसेचनं यथामात्र
तच्छक्त्यनुसारेण आ निवृत्तेरपराधनिवृत्तिपर्यंतमिति।
नारदः।

कश्चित्कृत्वात्मनश्चिह्नं द्वेषात्परमभिद्रवेत्।
हेत्वर्थगतिसामर्थ्यैर्युक्तं तत्र परीक्षणं॥

आत्मनश्चिह्नं व्रणादिरूपं कृत्वा परमभिद्रवेत् अहम-
नेन व्रणवान्कृतोऽयं दण्ड्यतामिति अनुयुञ्ज्यात्। हेतुर्वै-
कृतस्वरादिः अर्थः प्रयोजनं गतिः सन्निधिगमनं साम-
र्थ्यं प्रहारक्षमता। कात्यायनः।

हेत्वादिभिर्न पश्येच्चेद्दण्डपारुष्यकारणं।
तदा साक्षिकृतं तत्र दिव्यं वा विनियोजयेत्॥

साक्ष्यभावे दिव्यं। बृहस्पतिः।

आक्रुष्टस्तु समाक्रोशंस्ताडितः प्रतिताडयन्।
हत्वाततायिनं चैव नापराधी भवेन्नरः॥
वाक्पारुष्यादिना नीचो यं संतमभिलंघयेत्।
स एव ताडयंस्तस्य नान्वेष्टव्यो महीभुजा॥

नीचः शूद्रादिः संतं ब्राह्मणादिकं स एव ब्राह्मणा-
दिरेव तस्य शूद्रादेः। हिंसार्थे षष्ठी नान्वेष्टव्यो न दण्ड्य
इत्यर्थः। रत्नाकरस्तु नीचोऽनुत्तमः सन्तमुत्तमं स
एव उत्तम एवेत्यर्थः इत्याह। नारदः।

श्वपाकपण्डचाण्डालवेश्यावधकवृत्तिषु।
हस्तिपव्रात्यदासेषु गुर्वाचार्यातिगेषु च॥

मर्यादातिक्रमे सद्यो घात एवानुशासनं।
न च तद्दण्डपारुष्ये दोषमाहुर्मनीषिणः॥
यमेते ह्यतिवर्तेरन्नोत्तमस्तान् नृपं नयेत्।
स एव विनयं कुर्यान्न तद्विनयभाङ्नृपः।
मला ह्येते मनुष्याणां धनमेषां मलात्मकं॥
अतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेत्।

उग्र्यां क्षत्तुर्जातः श्वपाकः।

क्षत्तुर्जातस्तथोग्र्यां च श्वपाक इति कथ्यते।

इति वचनात्। उग्रस्तु।

शूद्रायां क्षत्रियाज्जातं प्राहुरुग्रमिति द्विजाः।

इति देवलेन निर्णीतो ग्राह्यः पण्डः क्लीबः चाण्डालः शूद्राद्ब्राह्मण्यां जातः वधकवृत्तिः परवध एव वृत्तिर्जीवनोपायो यस्य स वधकवृत्तिर्धीवरादिः हस्तिपो हस्त्यधिरोहकः दासोऽत्र गृहजातादिः गुर्वाचार्यातिगः गुर्वाचार्यवचनलङ्घनकर्ता मर्यादा धर्मव्यवस्था सद्योऽविलंबितं घात एव ताडनमेव तच्च यथापराधं श्वपाकादयो येषु ताडनं कुर्वते ते एवैषां घातरूपं दण्डं कुर्युः। तेषामसामर्थ्ये राजा तं घातरूपमेव दण्डं। अत्र हेतुर्मला ह्येते इत्यादीत्यर्थः। रत्नाकरादिपुरस्कृतोऽप्ययमेवार्थः। कात्यायनः।

अस्पृश्यधूर्त्तदासानां म्लेच्छानां पापकारिणां।
प्रातिलोम्यप्रसूतानां ताडनं नार्थतो दमः॥

पापकारिणोऽतिशयेन। प्रातिलोम्यप्रसूता निषादाद-

द्यः। विष्णुः॥ अजाश्वोष्ट्रघाती ह्येककरपादः कार्यः विमांसविक्रयी ग्राम्यपशुघाती च कार्षापणशतं दण्ड्यः पशुस्वामिने तन्मूल्यं दद्यात्। पशूनां पुंस्त्वोपघातकारी च अरण्यपशुघाती च पंचाशतं कार्षापणान् पक्षिघाती मत्स्यघाती च दशकार्षापणान् कीटोपघाती कार्षापणं। अतस्तु जीविनामेष दण्डः॥ विमांसं विरुद्धमांसं श्वसृगालादिमांसमिति यावत्। अत्यंताभ्यासे तु याज्ञवल्क्यः।

कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी।
अङ्गहीनः प्रकर्तव्यो दाप्यश्चोत्तमसाहसम्।

कात्यायनः।

त्रिगुणो द्वादशपणो घाते तु मृगपक्षिणां।
सर्पमार्जारनकुलश्वशूकरवधे नृणां॥

अयमत्यंतापकृष्टमृगपक्षिघाते त्रिगुणरूपः। तत उत्कृष्टघातेषु दशपणः स च प्रागेवोक्तः तत उत्कृष्टघाते दशपणः। विष्णूक्तपंचाशत्पणस्तु अत्यंतोत्कृष्टमृगपक्षिवधविषयः।

पञ्चाशदुत्तमो दण्डः शुभेषु मृगपक्षिषु॥

इति वचनात्। मनुः।

गोकुमारीदेवपशूनुक्षाणं वृषभं तथा।
वाहयन् साहसं पूर्वं प्राप्नुयादुत्तमं वधे॥

गोकुमारी वृषेण संयुक्ता गौः देवाय दत्तः पशुः देवपशुः उक्षाणं 'उक्ष सेचने' इत्यनुसारात्। बीजसेक्तारं वृषं।

वृषभपदेन जीर्णवृषो बोक्तः। मनुः।

छिन्नास्ये भिन्नयुगे तिर्यक्प्रतिमुखागते।
अक्षभंगे च यानस्य चक्रभंगे तथैव च।
छेदने चैव यंत्राणां योक्त्ररश्म्योस्तथैव च।
आक्रंदे वाप्यपैहीति न दण्डं मनुरब्रवीत्।

छिन्नास्ये छिन्ननासासंयंत्रिरज्जौ भिन्नयुगे पुरोभिन्नयुगकाष्ठे। तिर्यक्प्रतिमुखागते इत्यनेन तिर्यक् प्रतिमुखं यत्तत्प्रतिरोधादागतमागमनं तेन तिर्य्यग्विरोधिगमनं बलेन यत्परस्य यानस्यागमनादि तदपि न दंडहेतुरित्युक्तं। अक्षश्चक्रमध्यं काष्ठं यंत्राणां युगादिवन्धनानां योक्त्रं युगवन्धनरज्जुः रश्मिः प्रग्रहः आक्रंदे चाप्यपैहीति दूरं गच्छेत्युच्चैरभिनाये सारथ्यादिना कृते तदनादरेण समीपमागतो यदि रथादिना पीड्यते तदा सारथ्यादेर्न दंड इत्यर्थः। तथा।

यत्रातिवर्त्तते युग्यं वैगुण्यात्प्राजकस्य तु।
तत्र स्वामी भवेद्दंड्यो हिंसायां द्विशतं दमं॥

यत्रानभिज्ञः प्राजकः सारथ्यादिः स्वामिना कृतः तदज्ञानाच्च युग्यं तुरगादि अतिवर्त्तते अतिक्रामति तत्र तज्जन्यहिंसायां स्वामी द्विशतं दण्ड्यः यत्र पुनरभिज्ञः प्राजकः सारथ्यादिः स्वामिना कृतः तत्र प्राजकस्यैव न स्वामिनः। तदिदमाह मनुः।

प्राजकश्चेद्भवेदाप्तः प्राजको दंडमर्हति।
स चेत्पथि न संरुद्धं पशुभिर्वा रथेन वा॥

प्रमापयेत्प्राणभृतस्तत्र दंडो विचारितः ।

यत्र प्राजकः कौशल्यप्रयुक्तः परवाह्यांतरेण यानप्रतिरोधः प्राणिहिंसाहेतुर्भवति तत्रापि प्राजकस्य दंडो विचारितो निश्चित इत्यर्थः । इदानीं प्राणिविशेषे सारथ्ये दंडविशेषमाह मनुः ।

मनुष्यमारणे क्षिप्रं चौरवत्किल्बिषं भवेत् ।
प्राणवत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु ॥

अत्र चौरवदित्यनेन सति साहसे योऽर्थदंडः सोऽतिदिश्यते न तु वधदंडस्तस्यार्द्धत्वाभावात् उत्तरार्द्धे गवादिषु अर्द्धत्वाभिधानासंगतेः । तथा ।

क्षुद्रकाणां पशूनां च हिंसायां द्विशतो दमः ।
पञ्चाशत्तु भवेद्दंडः शुभेषु मृगपक्षिषु ॥
गर्दभाजाविकानां च दंडः स्यात्पंचमाषिकः ।
माषिकस्तु भवेद्दंडः श्वशूकरनिपातने ॥

क्षुद्रत्वमल्पपरिमाणत्वं तच्च वयसः कलभादीनां जातितोऽडजादीनां । शुभमृगा रुरुप्रभृतयः शुभपक्षिणः शुकादयः । माषको द्विरूप्यकृष्णले इति पारिजातः । कात्यायनः ।

प्रमापणे प्राणभृतां प्रतिरूपं तु दापयेत् ।
तस्यानुरूपं मूल्यं वा दंड इत्यब्रवीन्मनुः ॥

प्रतिरूपं प्रमापितप्राणिगुणादिना समं एतच्च प्रतिरूपादिदानं स्वामिने ।

इति विद्वद्विरचिते विवादार्णवसेतुके ।

दण्डपारुष्यधर्माद्यैरूर्मिः पंचदशी गता ॥ १५ ॥

षोडशोर्मिः

॥ अथ स्तेयं ॥

तत्र मनुः ।

एषोऽखिलेनाभिहितो दंडपारुष्यनिर्णयः ।
स्तेनस्यातः प्रवक्ष्यामि विधिं दंडविनिर्णये ॥
स्यात्साहसं त्वन्वयवत् प्रसभं कर्म यत्कृतं ।
निरन्वयं भवेत्स्तेयं कृत्वापव्ययते च यत् ।[1]

अन्वयवत् रक्षकपुरुषसमक्षं तेन प्रसभं बलात्कारेणापहृत्यापहारमगोपयतोऽपहरणं साहसं निरन्वयं रक्षकपुरुषासमक्षं अपव्ययते अपहृतमित्यर्थः । तेन यत्रापहार्यापहरणं भवति तत्स्तेयं । अथ स्तेनाः । तत्र मनुः ।

द्विविधांस्तस्करान्विद्यात्परद्रव्यापहारिणः ।
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥
स्वचिह्नैरेव विज्ञेयाश्चौरैस्तस्करवेदिभिः ।

स्वचिह्नैश्चौरचिह्नैः । बृहस्पतिः ।

प्रकाशाश्चाप्रकाशाश्च द्विविधास्तस्कराः स्मृताः ।
प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते सहस्रशः ॥

प्रज्ञा परद्रव्यापहारानुरूपा माया परव्यामोहनं । तथा ।

नैगमा वैद्यकितवाः सभ्योत्कोचकवंचकाः ।
दैवोत्पातविदो भद्राः शिल्पज्ञाः प्रतिरूपकाः ॥

---

१ केषुचित्पुस्तकेषु "हृत्वापह्नवते च यत्" इति पाठो दृश्यते तस्यार्थः । स्वामिपरोक्षं हृतं तत्स्तेयं भवेत् । यत्र हृत्वा अपह्नुते तदपि स्तेयमेव इति ।

अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः।
प्रकाशतस्करा ह्येते तथा कुहकजीविनः॥

नैगमाः कपटतुलादिधारणद्वारार्थहारिणः। वैद्या रोगं प्रकोप्यार्थहारिणः। कितवाः कूटदेवनेनार्थहारिणः सभ्याः पार्षदाः अर्थलोभेनान्यायवादिनः उत्कोचकाः कार्यादिकारिणः सन्त उत्कोचग्राहिणः वंचकाः संभूयोद्यतानां प्रच्छायेतरार्थग्राहिणः दैवं भाग्यं भद्राः शान्तिनियुक्ताः शांतिहेतुमकृत्वैवार्थहराः शिल्पज्ञाः कूटशिल्पेनार्थहराः कूटसाक्षिणो यथावादेन व्यवहारसाक्षिणः कुहकजीविन इंद्रजालादिनार्थहारिणः। नारदः।

प्रकाशवंचकास्तत्र कूटमानतुलाश्रिताः।
उत्कोचकाः सोपधिकाः कितवाः पण्ययोषितः॥
प्रतिरूपकराश्चैव मंगलादेशकरिणः।
इत्येवमादयो ज्ञेयाः प्रकाशतस्करा भुवि॥

सोपधिकाः ये अभयं मायां वा दर्शयित्वा परस्य धनमपहरंति। मंगलादेशकारिणः मंगलादेशद्वारार्थहराः इत्येवमादय इत्यादिपदेन नानापण्योपजीव्यादयो ग्राह्याः। नारदः।

अप्रकाशास्तु विज्ञेया बहिरभ्यन्तराश्रिताः।
सममत्तप्रमत्तार्तान्संलुप्याक्रम्य ये नराः॥
सन्धिच्छिदः पांथमुषो द्विचतुःपादहारिणः।
उत्क्षेपकाः सस्यहरा ज्ञेयाः प्रच्छन्नतस्कराः॥

उत्क्षेपकाः रक्षकस्याग्रत एवानवहितस्य दृष्टिं व-

र्पयित्वार्थहारिणः। सस्यहरशब्देन प्रच्छन्नहारकमात्रं विवक्षितं। रत्नाकरकारधृतान्यन्यानि वचनपटलान्यनतिप्रयोजकत्वेनोपेक्षिततया ग्रंथबाहुल्यभिया च नेह लिखितानि। मनुः।

तेषां दोषानभिख्याप्य स्वे स्वे कर्मणि तत्त्वतः।
कुर्वीत शासनं राजा सम्यक् सारानुसारतः॥

अभिख्याप्य लोके कथयित्वा सारशब्दो ऽत्रापहृतधनपरः तेनापहृतधनानुसारेण तान् दंडयेदित्यर्थः। बृहस्पतिः।

संसर्गचिह्नलोप्त्रैश्च विज्ञाता राजपूरुषैः।
प्रदाप्यापहृतं शास्यो दमैः शास्त्रप्रचोदितैः॥

संसर्गः प्रमितैश्चौरैः सह मेलनं चिह्नं चौरत्वलिंगं संधिखनित्रादि लोप्त्रं चोरितद्रव्यं एषामन्यतमेनापि चौरमवधार्य चोरितद्रव्यं तद्द्वारा द्रव्यस्वामिने प्रदाप्य राजा शास्त्रदृष्टेन दण्डेन तं शासयेदित्यर्थः। मनुः।

परमं यत्नमातिष्ठेत्स्तेनानां निग्रहे नृपः।
स्तेनानां निग्रहादस्य यशो राष्ट्रं च वर्द्धते॥
अभयस्य तु यो दाता स पूज्यः सततं नृपः।
सत्रं हि वर्द्धते तस्य सदैवाभयदक्षिणं॥

॥ अथ प्रकाशतस्करदंडः॥

तत्राह व्यासः।

तुलामानविशेषेण लेख्येन गणनेन च।
अर्घस्य वृद्धिह्रासेन मुष्णंति वणिजो जनान्॥

तद्रव्यसदृशैर्द्रव्यैर्हीनमूल्यैर्विमिश्रणं ।
कुर्वंत्यौपयिकाश्चान्ये पण्यानां परिवर्तने ॥

याज्ञवल्क्यः ।

मानेन तुल्यया वापि पोषमष्टममाहरेत् ।
दंडं स दाप्यो द्विशतं वृद्धौ हानौ च कल्पितं॥

मानेन कपटमानेन वाकारोऽनास्थायां तेन पेलवे नापि छद्मप्रकारेण कपटतुलादिनापि यः परद्रव्यस्याष्टमांशमपहरति स पणशतद्वयं दंडं दाप्यः । वृद्धौ हानौ चेति ।यस्तु नवमांशं सोऽष्टमभागन्यूनं द्विशतं यश्च सप्तमांशं सोऽष्टमभागं द्विशतं दाप्य इत्यर्थः । वाचस्पतिमिश्रेणाप्येष एवाऽर्थो ऽनुवर्णितः । शंखलिखितौ ॥ कूटतुलामानप्रतिमानव्यवहारे शारीरोंगच्छेदे वा ॥ माने प्रस्थादि शारीरो मुंडनादिरूपः अंगच्छेदः कर्णादिच्छेदः कूटतुलामानेन कूटप्रतिमानेन वा यो व्यवहरति बहुधा तस्य मुंडनं यस्तु तच्छीलः तस्य कर्णादिच्छेदः कार्य इति मिश्रभट्टाचार्याः । इयं गौरवागौरवाभ्यां विकल्पस्थितिरिति रत्नाकरः । मनुः ।

समैर्हि विषमं यस्तु चरेद्वै मूल्यतो ऽपि वा ।
स प्राप्नुयाद्दमं पूर्वं नरो मध्यममेव वा ॥

समैः साधारणैः परार्थैः विषमं विलक्षणं । यस्तु परिवर्तनेन मूल्येन वा गृह्णन् परस्य षष्ठभागहानौ सार्द्ध पणशतद्वयं । पंचादिभागहानौ तु पंचपणशतं दंडं दाप्य इत्यर्थः । एवमेव हलायुधादयः । तथा ।

अबीजविक्रयी यस्तु बीजोत्कर्षी तथैव च।
मर्यादाभेदकश्चैव विरुतं प्राप्नुयाद्वधं॥

अबीजविक्रयी अबीजं बीजतया यो विक्रीणीते बीजोत्कर्षी उप्तमपि बीजं बलेन यो हरति मर्यादाभेदकः देशजातिकुलशास्त्रराजलोकस्थित्यतिक्रमकारी विरुतं वधं कर्णादिच्छेदनरूपं। बृहस्पतिः।

प्रच्छन्नदोषव्यामिश्रपुनःसंस्कृतविक्रयी।
पण्यं तद्द्विगुणं दाप्यो वणिग्दंडं च तत्समं॥

प्रच्छन्नदोषो गोपितदोषः व्यामिश्रं अपद्रव्यमिश्रितं पुनः संस्कृतं विक्रय्य पण्यं पुरातनं शाणादिना पुनर्नवीकृतं य एषामन्यतमं विक्रीणीते स विक्रीतभाजनात् द्विगुणं भाजनादिकं क्रेतरि विक्रीतवस्तुसमं च दंडं राजनि दाप्य इत्यर्थः। याज्ञवल्क्यः।

मिथ्या वदन्परीमाणं शुल्कस्थानादपाक्रमन्।
दाप्यस्त्वष्टगुणं यश्च स व्याजक्रयविक्रयी॥

पण्यस्य परीमाणमतथ्यं वदन् क्रयादौ कर्त्तव्ये आपणं परिहरन्सकूटं क्रयं विक्रयं वा कुर्वन्प्रहृतपण्यादष्टगुणं दंडं दाप्य इत्यर्थः। विष्णुः॥ शुल्कस्थानमनाक्रमन्सर्वापहारमाप्नुयात्॥ विक्रयादौ कर्त्तव्ये आपणं परिहरन्सर्वस्वं दंड्यः इत्यर्थः। इदमभ्यासे याज्ञवल्क्योक्तं पुनरनभ्यास इत्यविरोधः। याज्ञवल्क्यः।

तुलाशासनमानानां कूटकृन्नाणकस्य च।
एभिश्च व्यवहर्ता यः स दाप्यो दममुत्तमम्॥

तुला सुवर्णादितोलनदंडः शासनं राजसंबंधि चिन्हम् । नाणको मुद्रामानं टंकादि य एतान् कूटान् निर्माति यो वा तेन व्यवहरति स पणसहस्रं दंड्य इत्यर्थः । तथा ।

अकूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकं ।
सनाणकपरीक्षी तु दाप्य उत्तमसाहसं ।

नाणको मुद्रेति व्याख्यातं यो मुद्रापरीक्षको दौरात्म्यादिना मंदां मुद्रां भद्रां भद्रां वा मंदां ब्रूते स सहस्रं पणान्दण्ड्य इत्यर्थः । विष्णुः ॥ उत्तमं साहसं दंड्यो भिषङ्मिथ्याचरन्नुत्तमेषु मध्यमं मध्यमेषु प्रथमं तिर्यक्षु ॥ व्यासः ।

अनिच्छन्तमभूमिज्ञं संयोज्य व्यसने नरं ।
अपकर्षति तद्द्रव्यं वेश्याकितवशिल्पिनः ।

अनिच्छंतं प्रवृत्त्यनुन्मुखं अभूमिज्ञं कार्याकार्यज्ञानहीनं । एते विश्रब्धवंचका इति भावः । बृहस्पतिः ।

अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्रब्धवंचकाश्चैव निर्वास्याः सर्व एव ते ।

याज्ञवल्क्यः ।

उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ।

तथा बृहस्पतिः ।

ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तु ये नृणां ।
श्रावयंत्यर्थलोभेन विनेयास्ते ऽपि यत्नतः ।

याज्ञवल्क्यः ।

वसानस्त्रीन्पणान् दाप्यो रजकस्तु परांशुकं ।

१ दंड्य इत्यपि पाठः

विक्रयावक्रयाधानयाचितेषु पणान्दश ।
अवक्रयो भाटकं आधानं बंधकीकरणं । याज्ञवल्क्यः।
कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ।
अंगहीनः प्रकर्त्तव्यो दाप्यश्चोत्तमसाहसं ॥
असुवर्णे औपधादियोगात्सुवर्णभ्रममुत्पाद्य यः क्रयादिव्यवहारं करोति यो वा श्वादिमांसं हरिणादिमांसत्वेन प्रकाश्य विक्रीणाति स पणसहस्रं दंडमादाय नासादंन्तकरशून्यः कार्य इत्यर्थः। एवमेव विवादचिंतामणिः मनुः ।
सर्वकंटकपापिष्ठं हेमकारं तु पार्थिवः ।
प्रवर्तमानमन्याये च्छेदयेल्लवशः क्षुरैः ।
कंटकः प्रकाशतस्करः प्रवर्तमानमिति नित्यप्रवृत्तौ लट् । तेनान्यायाभ्यासेऽयं दंड इत्याहुः । कात्यायनः।
मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससां ।
अजातौ जातकरणे विज्ञेयो ऽष्टगुणो दमः ॥
लघुमूल्यकानामेतेषां वस्तूनां कौशलेन बहुमूल्यकवस्तुसादृश्यं समुत्पाद्य विक्रयी प्रकृतमूल्यादधिकं यत्स लभते तदष्टगुणं दमं दाप्यः । अत्र रत्नाकरोक्तोदाहरणं । यथा मृदि कस्तूरिकामोदसञ्चारेण कस्तूरिकेति । चर्मणि वर्णोत्कर्षोत्पादनेन व्याघ्रचर्मेति । स्फटिके लौहित्याचरणेन पद्मराग इति। कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति । कार्ष्णायसे वर्णोत्कर्षाधानेन रजतमिति वि-

१ स्वमुत्क्रयो याचितं वा ददाति

त्वकाष्ठे चंदनामोदसंचारेण चंदनमिति कार्पासिके वा गुणाधानेन कौशेयमित्यादि। तथा।

समुद्गपरिवर्तं च सारभाण्डं च कृत्रिमं।
आधानं विक्रयं वापि नयतो दंडकल्पना॥
भिन्ने पणे तु पञ्चाशत् पणे तु शतमुच्यते।
द्विपणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान्।

समुद्गः संपुटः सारभांडं सारभूतं पण्यं मृगमदादि तथा च तुच्छं संपुटं पूर्णत्वेन प्रकाश्य कृत्रिमं वस्तु तात्विकत्वेन वा प्रकाश्य न्यस्यतो विक्रीणानस्य वा दंडः। स च कीदृगित्यत्राह भिन्न इत्यादि भिन्नो न्यूनः अर्थात् पणात् तेन पणन्यूनमूल्ये वस्तुनि तथा कुर्वतः पंचाशत्पणाः। पणमूल्ये तु शतं पणाः। द्विपणमूल्ये पणशतद्वयं। इतोधिकमूल्यादौ त्वनेनैव क्रमेण दंडवृद्धिः कार्येत्यर्थः। बृहस्पतिः।

अल्पमूल्यं तु संस्कृत्य नयंति बहुमूल्यतां।
स्त्रीबालकान् वंचयंति दंड्या अर्थानुरूपतः॥
हेममुक्ताप्रवालाद्यं कुर्वते कृत्रिमं तु ये।
क्रेत्रे मूल्यं प्रदाप्यास्ते राज्ञे च द्विगुणं दमं।

द्विगुणं दमं द्विगुणं विक्रीततादृग्द्रव्यमूल्यापेक्षया। याज्ञवल्क्यः।

अग्नौ सुवर्णमक्षीणं द्विपलं रजते शते।
अष्टौ त्रपुणि सीसे च ताम्रे पंचदशायसि॥

सुवर्णे शुद्धसुवर्णे अन्यादृशस्य क्षयित्वादिति तेन शु-

द्धसुवर्णे नक्तंदिनमपि दंदह्यमाने क्षयो न भवति । तथा रजतपलशते पलद्वयमेव तथा तावति शुद्धे त्रपुणि सीसे च अष्टपलमेव । तथा तावति ताम्रे पलपंचकं तादृशेऽयसि दश पलानि क्षीयंते इत्यर्थः । तथा च ततोऽधिकं क्षयं वदन् वणिक् दंड्य इति भावः । याज्ञवल्क्यः ।

शते दशपला वृद्धिरौर्णे कार्पासिके तथा ।
मध्ये पंचपला सौत्रे सूक्ष्मे तु त्रिपला स्मृता ।

स्थूलसूत्रे कार्पासिके आविके वा शतपलमिति वपनाय प्रयुक्ते उभे दशपलाधिकं वासो भवति मध्यविधसूत्रे पंचपलाधिकं सूक्ष्मसूत्रे त्रिपलाधिकमित्यर्थः ॥ ९ ॥

॥ तथाऽप्रकाशतस्करदंडः ॥

ये तु तस्कराः संधिं कृत्वा अनेकविधधनमपहरंति राजा अपहृतसर्वद्रव्यं स्वामिने दापयित्वा तेषां चौराणां हस्तौ छित्वा तीक्ष्णशूले निवेशयेत् । तदाहतुर्मनुव्यासौ।

संधिं कृत्वा तु ये चौर्यं रात्रौ कुर्वंति तस्कराः ।
तेषां छित्त्वा नृपो हस्तौ तीक्ष्णे शूले निवेशयेत् ॥

निवेशयेदित्यत्र तानिति शेषः । एवमुत्तरवचनेपि संधिच्छेत्तारमिति शेष इति बोध्यं ।

संधिच्छेत्तानेकविधं धनं प्राप्नोति वै गृहात् ।
प्रदाप्यः स्वामिने सर्वं कृतं शूले निवेशयेत् ॥

एतत्तु अभ्यासे । यथा बृहस्पतिः ।

संधिच्छिदोऽसकृये तान् शूलमारोपते ततः ॥

पांथचौर्ये विशेषयंति स एव ।

तथा पांथमुषो वृक्षे गले बध्वावलम्बयेत् ।

अत्र वाटीचौरास्तु वृक्षादावुद्बंधनीया इत्यर्थ इति मिश्राः । नारदकात्यायनौ ॥

स्वदेशघातिनो ये स्युस्तथा मार्गनिरोधकाः ।
तेषां सर्वस्वमादाय राजा शूले निवेशयेत् ॥

अस्यायमर्थः । यस्य राज्ञो देशे ये चौरा निवसंति तद्राजदेशस्तेषां चौराणां स्वदेशः ॥ तद्घातिनः स्वदेशघातिनः । एतेन परदेशघातिनां चौराणां राज्ञा सर्वस्वग्रहणं न कर्त्तव्यमिति भावः । मनुः ।

पुरुषाणां कुलीनानां नारीणां च विशेषतः ।
मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥

कुलीनानां सत्कुलजातानां मुख्यानां मरकतादीनां । तत्र नारीपुरुषयोर्वधे विशेषमाह बृहस्पतिः ।

मनुष्यहारिणो राज्ञा दग्धव्यास्तु कटाग्निना ।
स्त्रीहर्ता लौहशयने दग्धव्यो वै कटाग्निना ॥

कटो वीरणः तथाच कटेन वेष्टयित्वा तत्प्रभवेन कटाग्निना दाह्या इति पूर्वप्रतीकार्थः । परत्र लौहशयने इत्यधिकं । व्यासः ॥

नरहर्ता हस्तपादौ च्छित्वा स्थाप्यश्चतुष्पथे ।

इदं तु मध्यविधपुरुषापहरणे । व्यासः ।

पुरुषं हरतः प्रोक्तो दंड उत्तमसाहसः ।
सर्वस्वं हरतो नारीं कन्यां तु हरतो वधः ॥

इदमपकृष्टकन्यापहरणे । तथा ।

वाजिवारणबालानां चाददीत बृहस्पतिः ।

सर्वस्वमित्यनुषंगः । हरणेइत्यपि पूरणीयम् । मनुः ।

गोषु ब्राह्मणसंस्थासु तूलिकायाश्च भेदने ।
पशूनां हरणे चैव सद्यः कार्योऽर्द्धपादिकः ॥
महापशूनां हरणे शस्त्राणामौषधस्य च ।
कालमासाद्य कार्यं च राजा दंडं प्रकल्पयेत् ॥

ब्राह्मणसंस्थासु ब्राह्मणस्वामिकासु तूलिकाया भेदनं नासाभेदनं तच्चेह वाहनार्थमिति रत्नाकरः । पशवश्चात्र बिडालनकुलव्यतिरिक्ताः क्षुद्रपशवः । तयोर्विशेषश्रवणान्महापशूनां हस्त्यश्वादीनां कालो युद्धादेः कार्यमारोहणादि तेन युद्धाद्यवसरे ऽश्वाद्यपहरणमतिदंडाय दंडकल्पनं च वक्ष्यमाणयाज्ञवल्क्यवचनात् । नारदः ।

महापशून्स्तेनयतो दंड उत्तमसाहसः ।
मध्यमो मध्यमपशून्पूर्वः क्षुद्रपशौ हृते ॥

व्यासः ।

अश्वहर्ता हस्तपादौ कटिं छित्त्वा प्रमाप्यते ।

एतच्च विशिष्टाश्वहरणे सामान्याश्वहरणे तु विष्णुनैककरपादादिकत्वस्य प्रतिपादनात् । याज्ञवल्क्यः ।

बंदिग्राहांस्तथा वाजिकुंजराणां च हारिणः ।
प्रसह्य घातिनश्चैव शूलमारोपयेन्नरान् ॥

मनुः ।

कोष्ठागारायुधागारदेवतागारभेदिनः ।

हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचारयन् ॥

कोष्ठागारं धान्यागारं अविचारयन्कर्मणि निश्चिते अ-विलंबमानः । विष्णुः ॥ गोश्वोष्ट्रगजापहारकः एककरपादिकः कार्यः अजाद्यपहारी एककरश्च । करितुरगावत्रात्यन्तापकृष्टावुक्तौ प्रथमाशास्यौ वा गुणवान् समयो वा न युद्धस्येत्यतः शासनलाघवं । व्यासः ।

पशुहर्तुश्चार्द्धपादं तीक्ष्णशस्त्रेण कर्त्तयेत् ।

तस्य एकपादं कुण्वकुद्दालादिना छिन्यादित्यर्थः ॥

धान्यं दशभ्यः कुंभेभ्यो हरतो ऽप्यधिकं वधः ।

शेषे ऽप्येकादशगुणं दाप्यस्तस्य च तद्धनं ॥

• प्रमाणस्थपुरुषस्य प्रमाणस्थकरस्य द्वादशभिः प्रसृतिभिः कुडवो भवति चतुर्भिः कुडवैः प्रस्थो भवति चतुर्भिः प्रस्थैराढकः चतुर्भिराढकैर्द्रोणः कुंभ इति विवादचिंतामणिः ।

दश द्रोणा भवेत् खारी कुम्भोपि द्रोणविंशतिः ।

द्रोण उक्तो मिताक्षरायाम् ।

अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम् ।

पुष्कलानि च चत्वारि आढकः परिकीर्तितः ॥

चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम् ।

इति स्मार्तभट्टाचार्य्याः । दशभ्य इति इतोप्यधिकं धान्यमपहरन्मारणीयः न्यूनं त्वपहरन् तत्समं धान्यं स्वामिनि तदेकादशगुणं च राजनि दंडत्वेन दाप्य इत्यर्थः । अन्ये तु ।

पलं च कुडवः प्रस्थ आढको द्रोण एव च।
धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः॥
द्रोणैः षोडशभिः खारी विंशत्या कुंभ उच्यते।
कुंभैस्तु दशभिर्वाहो धान्यसंख्या प्रकीर्तिता॥

विंशत्या द्रोणैरित्यन्वयः। एतद्वाक्यानुसारेण च क्रममाह मनुः।

क्षेत्रिकस्यात्यये दंडो भागाद्दशगुणो भवेत्।
तदर्द्धदंडो भृत्यानामज्ञानात्कर्षकस्य तु।

सस्यभागव्यवस्थया भूकर्षकस्य दोषेण सस्यनाशे स्वभागाद्दशगुणस्तस्य दंडः तद्भृत्यस्य दोषेण तन्नाशे स्वभागात् पंचगुणः कर्षकस्य दंड इत्यर्थः। अयं च दंडो राज्ञा ग्राह्यः। भूस्वामी तु तद्विनाशितं स्वग्राह्यं सस्यभागं ततो लभते इति द्रष्टव्यं। मनुः।

परिपूतेषु धान्येषु शाकमूलफलेषु च।
निरन्वयः शतं दंड्यः सान्वयोऽर्द्धशतं दमं।

निष्पुलाकीकृतेषु स्वल्पधान्येषु अपहृतेषु शाकमूलफलेषु वा निरन्वयः ग्रहणहेतुप्रीत्यादिसंबंधशून्यः शतं पणान् दंड्यः। तत्संबंधवांश्चेत् पंचाशत्पणान् दंड्यः। खलस्थधान्यहरणेऽयं दंडः। गृहस्थधान्यहरणे पूर्वोक्त एव दंड इत्यविरोधः। तथा।

पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च।
अंल्पेष्वपरिपूतेषु दंडः स्यात्पंच कृष्णलाः॥

---

१ अन्येष्वपरिपूतेषु इत्यपि पाठः क्वचिद्दृश्यते तस्यार्थः अन्येषु समर्घपुरुषभारतार्पेषु.

हस्त्यश्वरथहर्तृंश्च हन्यादेवाविचारयन् ॥

कोष्ठागारं धान्यागारं अविचारयन्कर्मणि निश्चिते अविलंबमानः। विष्णुः॥ गोश्वोष्ट्रगजापहारकः एककरपादिकः कार्यः अजाद्यपहारी एककरश्च। करितुरगावत्रात्यन्तापकृष्टावुक्तौ प्रथमाशास्यौ वा गुणवान् समयो वा न युद्धस्येत्यतः शासनलाघवं। व्यासः।

पशुहर्तुश्चार्द्धपादं तीक्ष्णशस्त्रेण कर्त्तयेत्।

तस्य एकपादं कुण्वकुद्दालादिना छिन्द्यादित्यर्थः॥

धान्यं दशभ्यः कुंभेभ्यो हरतो ऽप्यधिकं वधः।

- -शेषे ऽप्येकादशगुणं दाप्यस्तस्य च तद्धनं॥

• प्रमाणस्थपुरुषस्य प्रमाणस्थकरस्य द्वादशभिः प्रसृतिभिः कुडवो भवति चतुर्भिः कुडवैः प्रस्थो भवति चतुर्भिः प्रस्थैराढकः चतुर्भिराढकैर्द्रोणः कुंभ इति विवादचिंतामणिः।

धिकसुवर्णस्य तन्मूल्यखारी कुम्भोपि द्रोणविंशतिः।

स्तच्छेदः कार्यः। तदूनपंचविंशत्

ल्यरजततादशवस्त्राणां वा हरणे अपहृतैकादशगुम। .

डः। तदूनसुवर्णस्यंतन्मूल्यरजततादशवस्त्राणां वा हरणे ताडनम्। तदूनसुवर्णस्य तन्मूल्यरजततादशवस्त्राणां वा हरणे कर्णच्छेदः कार्य्यः। हेम्नो रजतस्य वा शतकर्षाधिकस्य तथा वाससो वा शताधिकस्य हर्तावध्यः। पञ्चाशदधिकस्य तस्य हर्ता च्छिन्नहस्तः कार्यः। तदूनमूल्यस्य हर्ता एकादशगुणं तन्मूल्यं वा दाप्यः अपहृत-

पलं च कुडवः प्रस्थ आढको द्रोण एव च।
धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः॥
द्रोणैः षोडशभिः खारी विंशत्या कुंभ उच्यते।
कुंभैस्तु दशभिर्वाहो धान्यसंख्या प्रकीर्तिता॥

विंशत्या द्रोणैरित्यन्वयः। एतद्वाक्यानुसारेण च क्रममाह मनुः।

क्षेत्रिकस्यात्यये दंडो भागाद्दशगुणो भवेत्।
तदर्द्धदंडो भृत्यानामज्ञानात्कर्षकस्य तु।

सस्यभागव्यवस्थया भूकर्षकस्य दोषेण सस्यनाशे स्वभागाद्दशगुणस्तस्य दंडः तद्भृत्यस्य दोषेण तन्नाशे स्वभागात् पंचगुणः कर्षकस्य दंड इत्यर्थः। अयं च दंडो राज्ञा ग्राह्यः। भूस्वामी तु तद्विनाशितं स्वग्राह्यं सस्यभागं ततो लभते इति द्रष्टव्यं। मनुः।

परिपूतेषु धान्येषु शाकमूलफलेषु च।
निरन्वयः शतं दंड्यः सान्वर्पसमये अपहरन् अष्टा-
निष्पुलाकीकृतेषु स्व- हृतं च दाप्यः इत्यर्थः। व्यासः।
देषु वा नि—
-ल्पधान्यापहरणे क्षीरे तद्विकृती तथा।
स्वामिने तत्समं दाप्यो दंडं च द्विगुणं नृपे॥
मध्यहीनद्रव्यहारी पुष्पमूलफलस्य च।
दाप्यस्तद्विगुणं दंडमथवा पंच कृष्णलान्॥

मध्यहीनद्रव्यं नल्वादि कृष्णलशब्देन यथामितद्रव्यमभिप्रेतमिति रत्नाकरः। मनुः।

सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च।

दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥
वेणुवैणवभांडानां लवणानां तथैव च ।
मृन्मयानां च हरणे मृदो भस्मन एव च ॥
मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत् पशुसंभवं ॥
अन्येषामेवमादीनां मद्यानामोदनस्य च ।
फलानां चैव सर्वेषां हरणे द्विगुणो दमः ॥

द्दृटमल्पसूत्रादिहरणे। अन्यत् पशुसंभवं चर्मदंतादि। शंखलिखितौ॥ कृतकाष्ठाश्मकौलालचर्मवेत्रभांडेषु मूल्यात्पञ्चगुणः त्रयो वा कार्षापणाः एकचक्रापहरणे चत्वारिंशच्छकटेऽशीतिशतं कृतकाष्ठं घटितकाष्ठं कौलालं कुलालनिर्मितं मृन्मयमिति यावत्। भांडमश्मादीनां एकचक्रमेकरथांगं चत्वारिंशत् पणा एव अशीतिशतं अशीत्यधिकं शतं। तथा।

तं शतं दंडयेद्राजा यश्चाग्निं चोरयेद्गृहात् ॥

अग्निं श्रौतं स्मार्तं चेति विवादचिंतामणिः। नारदः।

काष्ठभांडतृणादीनां मृन्मयानां तथैव च।
वेणुवैणवभांडानां तथान्नाद्यस्थिचर्मणां ॥
शाकानामार्द्रमूलानां हरणे फलपुष्पयोः।
गोरसे तद्विकाराणां तथा लवणतैलयोः ॥
पक्वान्नानां कृतान्नानां मद्यानामोदनस्य च।
सर्वेषामल्पमूल्यानां मूल्यात्स्यात् पड्गुणो दमः ॥

इति प्रचुरकाष्ठादिविषयं स्वामिने ऽपि अपहृतद्रव्य-

अनापृष्ट्वं तु गृह्णानो हस्तच्छेदनमर्हति ॥

इदमप्युत्कृष्टस्वामिकतृणादिविषयमिति वाचस्पतिमिश्राः। गौतमः ॥ ब्राह्मणस्य न शारीरो दंडः कर्मवियोगविख्यापनविवासनांककरणानि । आवृत्तौ प्रायश्चित्ती तु सः॥ कर्मवियोगः चौरेण ब्राह्मणेन सह सतां क्रियानारंभः । विख्यापनं खरारोहणडिंडिमादिना चौरत्वं तस्य ख्यापनीर्थं । विवासनं देशाद्बहिष्करणं । अंककरणं ललाटे चोरचिह्नकरणं आवृत्तौ प्रायश्चित्ती सः प्रकारांतरेण जीवनाक्षमो ब्राह्मणश्चौरोऽपि न हननहस्तच्छेदनादिना दंड्यः किंतु हृतं वस्तु दत्वा चौर्यप्रायश्चित्तं कुर्यादित्यर्थः। एतानि यागादिपरब्राह्मणे । आपस्तंबः॥ पुरुषवधस्तेयभूम्यादानेषु वधः चक्षुर्निरोधश्चैतेषु ब्राह्मणस्य॥ स्तेयं सुवर्णहरणं एतेषु त्रिषु ब्राह्मणेतरस्य वधः ब्राह्मणस्य चक्षुरुत्पाटनं इदमधमब्राह्मणानां । विष्णुः ॥ स्तेनाः सर्व एवापहृतं धनिकस्य धनं दाप्याः । ततस्तेषामभिहितदंडप्रयोगः । याज्ञवल्क्यः

चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः ।
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ॥

चिह्नं ललाटे भगाद्यंकनं । इदं मध्यविधब्राह्मणानां । ब्राह्मणाधिकारे कात्यायनः ।

सहोढमसहोढं वा तत्त्वागमितसाहसं ।
प्रगृह्य चिह्नमावेद्य सर्वस्वैर्विनियोजयेत् ॥
अयःसन्धानयुक्ताश्च मन्दभक्ता बलान्विताः ।

कुर्युः कर्माणि नृपतेरा मृत्योरिति कौशिकः ॥

होढं लोप्त्रं तच्चेनागमितं ज्ञापितं साहसं चौर्यं यस्य तथा तं कुर्युरा मृत्योरिति योजना । सर्वस्वैरिति । इदं तु व्रतस्वाध्यायरहितधनवद्ब्राह्मणपरं । अयःसंधानयुक्ता- लौहनिगडबद्धा मंदभक्ताः कर्ममात्रौपयिकबलजनक- किञ्चिद्भक्ष्यभाजः । कर्माणि राजदास्यादीनि । इदं तु तादृशनिर्धनब्राह्मणपरं । बृहस्पतिः ।

व्रतस्वाध्यायवान्स्तेयी बंधनात्क्लिश्यते चिरं ।
स्वामिने तद्धनं दाप्यः प्रायश्चित्तं न कार्य्यते ॥

इत्यप्रकाशतस्करदंडः ॥ ७ ॥

॥ अथ चौरान्वेषणं ॥

तत्र रत्नाकरधृतो नारदः ।

सहोढग्रहणात्स्तेयं होढे सत्युपयोगतः ।
शंका त्वसज्जनैकार्थ्यादनायव्ययतस्तथा ॥
अहोढान्विमृशेच्चौरान् गृह्णीत परिशंकया ।
तथोपधाभिश्चित्राभिर्ब्रूयुस्तथ्यं यथा हि ते ॥
देश ग्रामं दिशं नाम जातिं वासं प्रतिश्रयं ।
कृतकार्यसहायास्तु प्रष्टव्याः स्युर्निगृह्य ते ॥
वर्णस्वराकारभेदात् संदिग्धविनिवेदनात् ।
अदेशकालवृत्तत्वान्निवासस्याविशोधनात् ॥
असद्व्ययात्पूर्वचौर्यादसत्संसर्गकारणात् ॥
शेषैरप्यनुगंतव्या न होढेनैव केवलं ॥

सहोढग्रहणात्सलोप्त्रग्रहणात । होढे असत्युपयोगतः

असति होढे लोप्त्रे उपयोगतः अन्यथा लभ्यकर्पूराद्युपयोगतः स्तेयं ज्ञेयं। शंका तु स्तेयस्य असज्जनैकार्थ्यात् असज्जनैर्मद्यपानाद्यासक्तैः ऐकार्थ्यात् एकप्रयोजनकत्वात् अनायव्ययतस्तथा शंका इति प्रथमवचनार्थः। अहोढान् होढरहितान् तथा गृहीतपरिशंकया उपधाभिश्चित्राभिर्व्याजैर्नानाविधैर्देशादिकं प्रष्टव्यास्ते यथा ब्रूयुरित्युत्तरवचनार्थः अहोढेनैव चौरा अन्वेष्टव्याः। किंतु वर्णस्वराकारभेदादिभ्योऽपीति तदुत्तरवचनार्थः। विवादरत्नाकरे याज्ञवल्क्यः।

ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा।
पूर्वकर्मापराधी च तथैवाशुद्धवासकः॥
अन्येपि शंकया ग्राह्या नामजात्यादिनिह्नवैः॥
द्यूतस्त्रीपानसक्ताश्च भिन्नशुष्कमुखस्वराः।
परद्रव्यगृहाणा च पृच्छका गूढचारिणः॥
निरायव्ययवंतश्च विनष्टद्रव्यविक्रयाः॥

ग्राहकैर्गृह्यते चौर इति ग्राहकैश्चौरोयमिति निर्दिष्टः सन् गृह्यते ध्रियत इत्यर्थः। पदेन हरणदेशादारभ्य पादचिह्नानुसारेण अशुद्धवासकः अपरिचितदेशवासकः नामजात्यादिनिह्नवैः स्वस्य नाम्नो जात्यादेर्वापलापैः। आदिपदेन ग्रामादिग्रहणं। निरायव्ययवंतः आयशून्याः संतो व्ययवंतः विनष्टद्रव्यविक्रयाः हृतद्रव्यैकदेशभूतद्रव्यक्रयकर्तारः। नारदः।

गवादिष्वपनष्टेषु द्रव्येषूपहृतेषु च।

पदेनान्वेषणं कुर्युरा मूलात्तद्विदो जनाः॥
ग्रामे व्रजे विवीते वा यत्र तन्निपतेत्पदं ।
बोद्धव्यं तद्भवेत्तेन नयेत्सोऽन्यत्र तन्नयेत् ॥
पदे प्रमूढे भग्ने वा विषमत्वाज्जलांतिके ।
यस्त्वासन्नतरो ग्रामो व्रजो वा तत्र पातयेत् ।
सीमाध्वनिर्द्वयोर्यत्र स्तेनप्रायो ऽशुचिर्जनः ।
नैवातरिक्षान्न दिवो न समुद्रान्न चान्यतः ।
दस्यवश्च प्रवर्त्तंते तस्मादेवं प्रकल्पयेत् ॥

तस्यार्थः । गवादिषु द्रव्येषु अपनष्टेषु केनाप्यपहृतेषु वा तत्पदेनान्वेषणं कर्तव्यं । तत्र यस्य ग्रामे व्रजे वा विवीते वा तत्पदं निपतेत्तेन ग्रामादिमता तद्बोद्धव्यं । पदे क्वियद्दृष्टे ऽग्रे तथा अपरिचिते तत्सन्निहितग्रामे निपातयेत् अन्यकल्पनं पुनस्तदभावादिति । अन्यान्यपि बहूनि रत्नाकरधृतानि नारदमनुकात्यायनयाज्ञवल्क्यवचनानि लौकिकत्वेनोपेक्षिततया ग्रंथगौरवभिया च नेह लिखितानि ॥ ७ ॥

## अथ स्तेनातिदेशः॥

तत्र मनुः ।

यो दत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनं ।
याजनाध्यापनेनापि यथा स्तेनस्तथैव सः ।

तथा ।

अग्निदान्भक्तदांश्चैव तथा शस्त्रावकाशदान् ।
सन्निधातॄंश्च मोषस्य हन्याच्चौरानिवेश्वरः ।

अदत्तादायिनश्चौरस्य । अपिशब्देन प्रतिग्रहादिपरिग्रहः । अग्निरत्र चौर्यानुकूलः । भक्तं चौरभक्ष्यं । शस्त्रं चौर्यांगं अवकाशः चौरावस्थानदेशः सन्निधातॄन् चौरचोरयितव्ययोः सन्निधापकानिति विवादचिंतामणिः । रत्नाकरकारस्तु सन्निधातॄंश्च मोषस्य मोषणीयद्रव्यस्यापहारानुकूलसन्निधानकारानित्यर्थः इत्याह। याज्ञवल्क्यः।

भक्तावकाशाग्न्युदकमंत्रोपकरणव्ययान् ।
दत्वा चौरस्य हंतुर्वा ज्ञानतो दंड उत्तमः ।

भक्तावकाशौ व्याख्यातार्थौ । अग्निरुदकं च चौर्योपष्टंभकं । मंत्रः चौर्योपायोपदेशः उपकरणं चौर्यसाधनं खनित्रादि व्ययोऽपहर्तुं गच्छतः पाथेयं ज्ञानतश्चौरं ज्ञात्वा एवं करणे उत्तममाहसो दंडः हंतुरप्येवं कुर्वतामीदृशो दंडः । नारदः ।

भक्तावकाशदातारः स्तेनानां च प्रसर्पतां ।
शक्ताश्च यदुपेक्षंते तेऽपि तद्दोषभागिनः ॥

ये भक्ताद्यन्यतमं चौराय ददति ये वा धारणक्षमा अपि चौरं त्यजंति ते ऽपि चौरवद्दंड्याः । तथा ।

आव्हायकादेशकरास्तथा चांतरदायकाः ।
समदंड्याः स्मृता ह्येते ये च प्रच्छादयंति तान् ॥

ये चौरान् आव्हयंति आदिशंति स्थाने स्थापयंति ज्ञात्वा चौरान् गोपयति वा ते सर्वे चौरसमाः ॥ चौगणामित्यनुवृत्तौ । कात्यायनः ।

केतारश्चैव भांडाना प्रतिग्राहिण एव च ।

समदंडाः स्मृता ह्येते ये च प्रच्छादयंति तान् ॥

चोरितद्रव्याणां तथा ज्ञातानां क्रेता ग्रहीता संगोप्ता च चौरसमं दंड्य इत्यर्थः । हन्यादित्यनुवृत्तौ विष्णुः ॥ प्रसह्य तस्कराणामवकाशभक्तप्रदाश्चान्यत्र ,राजाशक्तेः । राजा चेच्चौरनिराकरणाक्षमः तदा चौराय स्वरक्षार्थं भक्तादिदानेपि न दोष इत्यर्थः ॥ विवादरत्नाकरविवादचिंतामण्योर्मनुः ।

राष्ट्रेषु रक्षादिकृतान्सामंतांश्चैव देशितान् ।

अभ्याघातेषु मध्यस्थाञ्छिष्याच्चौरमिव द्रुतं ॥

देशावेक्षकस्तादृश एव सामंतोऽपि चौरादीनामवेक्षायामुदासीनो भवन् चौरवद्दंड्य इत्यर्थः । तथा तयोः स एव ।

ग्रामघाते हिताभंगे पथि मोपाभिदर्शने ।

शक्तितो न हि धावंतो निर्वास्याः सपरिच्छदाः ॥

ग्रामघाते ग्रामोपद्रवे हिताभंगे हितस्य एतस्य सस्योत्पत्त्यनुकूलस्य जलबंधनादेर्विदारणे चोरितद्रव्यस्य चौरहस्तस्थस्याध्वनि दर्शने वा यथाशक्ति तत्प्रतिकारमकुर्वाणो नियुक्तोऽपि ससाधनो देशान्निःसार्य्यः ॥ ॥

॥ अथ चौरापवादः ॥

तत्र मनुः ।

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।

आददानः परक्षेत्रान्न दंडं दातुमर्हति ॥

क्षीणवृत्तिः पाथेयशून्यः । तथा ।

वानस्पत्यं मूलफलं दार्वग्न्यार्थे तथैव च ।
तृणं च गोभ्यो ग्रासार्थं न स्तेयं मनुरब्रवीत् ॥

फलानि अन्यापरिगृहीतानि 'फलानि चागृहीतानी' ति गौतमवचनात् । तथा होमाग्निसंदीपनाय परेन्धनं तथा गोग्रासार्थं परतृणं ग्राह्यं । राजकृत्ये आपस्तम्बः ॥ ग्रामेषु नगरेषु चार्यान् शुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् । तेषां पुरुषास्तथागुणा एव स्युः । सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यं क्रोशो ग्रामेभ्यः ॥ ग्रामनगरयो रक्षकाः ससहायाः साधवः कार्याः तैश्च नगरात् परितो भूमौ योजनमितायां नगरे च यच्चौरैरपहृतं तद्देयं एवं ग्रामरक्षकैः ग्रामे क्रोशमिते तत्परिसरेऽपीत्यर्थ इति मिश्राः । कात्यायनः ।

गृहेषु मुषितं राजा चौरग्राहांस्तु दापयेत् ।
आरक्षकांस्तु दिक्पाल्यान् यदि चौरो न लभ्यते ।

गृहेष्वित्युपलक्षणं यदि चौरोऽन्विष्यमाणो न लभ्यते तदा तदनुसन्धायकद्वारा वा देशपतिद्वारा वा चोरितधनं राजा दापयेदित्यर्थः। आरक्षकः ग्रामरक्षानियुक्तः (कोतवाल) इति प्रसिद्धः। दिक्पालो दिक्षु नियुक्तो देशपतिरिति यस्य प्रसिद्धिः । रत्नाकरविवादचिंतामण्योः कात्यायनः ।

ग्रामांतेषु हृतं द्रव्यं ग्रामाध्यक्षं प्रदापयेत् ।
विवीते स्वामिना देयं चौरोद्धर्त्राविवीतके ॥

विवीतेऽरण्ये स्वामिना राज्ञा चौरोद्धर्त्राचौराश्रयीभूते-

नाविवर्तते क्षेत्रादौ । कात्यायनः ।

स्वदेशे यस्य यत्किंचिद्धृतं देयं नृपेण तत् ।
गृह्णीयात्तत्स्वयं नष्टं प्राप्तमन्यस्य पार्थिवः ॥
चौरैर्हृतं प्रयत्नेन स्वरूपं प्रतिपादयेत् ।
तदभावे तु मूल्यं स्यादन्यथा किल्बिषी नृपः ॥
लब्धे तु चौरे यदि च मोषस्तस्मान्न लभ्यते ।
दद्यात्तदर्थं वा चौरं दापयेद्वा यथोदितः ॥

स्वरूपं तदेव वस्तु चौरं वा धनं वेति विकल्पः ॥ विवादरत्नाकरे वृद्धमनुः ।

यस्मादपहृताल्लब्धं द्रव्यात्स्वल्पं तु स्वामिना ।
तच्छेषमाप्नुयात्तस्मात्प्रत्यये स्वामिना कृते ॥

मोषितद्रव्यादल्पं स्वामिना यस्मात्पुरुषाल्लब्धं तच्छेषमपि स्वामी तत एवाप्नुयात् । किंतु स्वामिना शेषांशे चौरयिमते चौर्यगतत्वेन शपथे कृते सतीत्यर्थः । यदि तु चौरत्वाभिमतस्य शेषापहारे प्रमाणं नास्ति तदोक्ता व्यवस्थेति द्रष्टव्यं । याज्ञवल्क्यः ।

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतं ।
अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥

शौल्किको रक्षादिकारी स्थानपालो देशपतिः । अनास्थायां वाकारः । नष्टं अनवधानगतं । अपहृतं चौरेण । तेनायमर्थः । नष्टमपहृतं वा वस्तु केनापि तदनुगामिना समानीतं राज्ञा वर्षपर्यंतं धारयितव्यं तदभ्यंतरे स्वामी चेदायाति तदा स एव नोचेद्वर्षोपरि तद्देशराजस्तद्गृह्णी-

यादिति मिश्राः । चंडेश्वरस्तु शौल्किकैः शुल्काधिकृतैः स्थानपालैः स्थानरक्षाधिकृतैर्वा नष्टमपहृतं वा द्रव्यं यदाहृतं प्राप्तं तद्यदा संवत्सराभ्यंतरे स्वामी नायाति तदा राज्ञा धारयितव्यं संवत्सरानंतरं शौल्किकादिभ्यो वक्ष्यमाणगौतमोक्तमंशं दत्वा राजा स्वयमेव गृह्णीयात्। संवत्सराभ्यंतरे च राज्ञो याज्ञवल्क्य एव 'पणानि'त्यादिना भागमाह।

पणानेकशफे दद्याच्चतुरः पंचमांशके ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥

एकशफे एकखुरे अश्वादाविति यावत्। पणान् चतुर इत्यन्वयः। पादं चतुष्पणपादं पणमिति यावत्। गौतमः ॥ प्रणष्टस्वामिकमधिगम्य राज्ञे ब्रूयुः विख्याप्यं । संवत्सरं राज्ञा रक्ष्यमूर्ध्वमधिगंतुश्चतुर्थं राज्ञः शेषं ॥ चतुर्थं खंडं भवतीति शेषः इति। मनुः ।

ममेदमिति यो ब्रूयात्सोऽनुयोज्यो यथाविधि ।
संवाद्यरूपसंख्यादीन्स्वामी तद्द्रव्यमर्हति ॥
अवेदयंस्तु नष्टस्य देशकालं च तत्त्वतः ।
वर्णं रूपं प्रमाणं च तत्समं दंडमर्हति ॥

अनुयोज्यः प्रष्टव्यः रूपं शुल्कादिरूपं संख्या चतुष्ट्वादिका आदिग्रहणादपहृतजात्यादिकं ॥

इति विद्वद्विरचिते विवादार्णवसेतुके ।
स्तेयदंडप्रभेदाद्यैस्तरंगः षोडशो गतः ॥ १६ ॥ ७ ॥

-

सप्तदशोर्मिः

## ॥ अथ साहसं ॥

तत्र विवादरत्नाकरे नारदः।

मनुष्यमारणं चौर्यं परदाराभिमर्षणं।
पारुष्यमभयश्चेति साहसं पंचधा स्मृतं ॥

एतत्केषाञ्चित्साहसानुकीर्तनं। स्वाभिमतमाह विवादचिंतामणौ।

सहसा क्रियते कर्म यत्किंचिद्बलदर्पितैः।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥

अत्र च साहसे रक्षितुर्न ज्ञानवारणं चौर्य्ये तु तस्य ज्ञानवारणमिति विशेषः। तदग्रे नारद एव व्यक्तीकरिष्यति। तथा नारदः।

तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमं तथा।
उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥

तद्विभजते स एव।

फलमूलोदकादीनां क्षेत्रोपकरणस्य च।
भंगाक्षेपावमर्दाद्यैः प्रथमं साहसं स्मृतं ॥
वासःपश्वन्नयानानां गृहोपकरणस्य च।
अनेनैव प्रकारेण मध्यमं साहसं स्मृतं ॥
व्यापादो विषशस्त्राद्यैः परदारप्रधर्षणं।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसं ॥

अत्रादिशब्दार्थो वक्ष्यमाणतत्तन्मुन्यंतरवचनाद्बोद्धव्यः। क्षेत्रोपकरणं हलादि गृहोपकरणं दृषदुपलादि।

तथा नारदः ।

तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र कीर्त्यते ।
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु ॥

अत्र अनयोः रक्षितुर्ज्ञाने सत्येव बलेन य आधिः यत्पीडनं तत्साहसं छलेन स्वामिनो ज्ञानावरणेन य आधिः यत्पीडनं तत्स्तेयमित्यर्थः । मनुः ।

हीनमध्योत्तमत्वेन त्रिविधं तत्प्रकीर्तितं ।
द्रव्यापेक्षो दमस्तत्र प्रथमो मध्य उत्तमः ॥
क्षेत्रोपकरणं सेतुं पुष्पमूलफलानि च ।
विनाशयन् हरन् दंड्यः शताद्यमनुरूपतः ॥
पशुवस्त्रान्नपानानि गृहोपकरणं तथा ।
हिंसयंश्चोरयन् दाप्यो द्विशताद्यं दमं तथा ॥
स्त्रीपुंगोहेमरत्नानि देवविप्रधने तथा ।
कौशेयं चोत्तमं द्रव्यमेषां मूल्यसमो दमः ॥
द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः ।
हर्ता वा घातनीयः स्यात् प्रसंगविनिवृत्तये ॥

तत्साहसं शताद्यं शतावरं द्विशतांतं अनुरूपतः विनाशितापहृतमूल्यानुसारेण । विवादरत्नाकरे मनुः ।

चर्मचार्मिकभाण्डेषु काष्ठलोष्टमयेषु च ।
मूल्यात्पंचगुणो दंडः पुष्पमूलफलेषु च ॥

चार्मिकमुपानदादि प्रथमचर्मपदं स्पष्टार्थमिति चंडेश्वरवाचस्पतिमिश्रौ । काष्ठमयं तंडुलादिपरिमाणपात्रं लोष्टमयं घटादि एतेषु सहसा विनाशितेषु मूल्यात्पंच-

गुणो दंडः। यस्तु पुष्पादौ शतावरो दंडो मनुनोक्तः सोऽपि प्रशस्तपुष्पादिपरः अतो नानेन विरोधः। विवादचिंतामणौ कात्यायनः।

क्षतं भंगावमर्दौ वा कुर्याद्द्रव्येषु यो नरः।
प्राप्नुयात्साहसं पूर्वं द्रव्यभाक् स्वाम्युदाहृतः॥

क्षतं किंचिन्नाशः द्रव्यमिह स्फटिकादि तेन "अवघाते तथा भेदे छेदे कुड्यादिपातने" इत्यादिवक्ष्यमाणयाज्ञवल्क्येन न विरोधः। नापि लघुगुरूणां क्षतादीनां समानदण्डनाप्रयोजकत्वमिति रत्नाकरः। द्रव्यभाक् स्वामी स्वामिने च स्फटिकादि देयमित्यर्थः। विष्णुः॥ गृहकुड्यादिभेत्तारं मध्यमसाहसं तच्च योजयेत्॥ परगृहभित्त्यादेरभिदारको मध्यमसाहसं राज्ञा दंड्यः स्वभग्नं च भित्त्यादिकं स पूर्ववत्कुर्यादित्यर्थः। याज्ञवल्क्यः।

अवघाते तथा भेदे छेदे कुड्यादिपातने।
पणान्दाप्यः पंचदश विंशतिं तद्द्विगुणं तथा॥

परकीयकुड्यादिघातने शिथिलीकरणे पंचदशपणाः। भेदे बंधशिथिलीकरणे विंशतिः छेदे द्विधाकरणे तथावमर्दे अवघातने उभयत्रापि चत्वारिंशत्पणा दंडः। इह तु कुड्यमात्रसंबंधिनि भेदमात्रे पंचदशपणात्मको दंडः। विष्णुवचने च गृहसहितकुड्यादिगते प्रौढविदारणे मध्यमसाहसमिति न विरोध इति विवादरत्नाकरः। याज्ञवल्क्यः।

दुःखोत्पादि गृहे द्रव्यं क्षिपं प्राणहरं तथा।

षोडशाद्यः पणान् दंड्यो द्वितीयो मध्यमं दमम् ॥
दुःखोत्पादि कंटकादि गृहे परगृहे प्राणहरं सर्पादि षोडशपणान् आद्यः दुःखोत्पादिद्रव्यप्रक्षेपी दंड्यः। द्वितीयो मध्यमं साहसं दंड्य इत्यर्थः। विष्णुः॥ गृहपीडाकरं द्रव्यं क्षिपन्दंड्यः पणशतं ॥ अत्र पीडा उत्कटाभिमता एतेन पीडाकरद्रव्यस्य गृहे क्षेपं कुर्वतः षोडशपणदंडस्याभिधातुर्याज्ञवल्क्यस्य तत्रैव पणशतदंडाभिधात्रा विष्णुना विरोधो निरस्त इति रत्नाकरः। मनुः।

संक्रमध्वजयष्टीनां प्रतिमानां च भेदकः।
प्रतिकुर्यात् स तत्सर्वं दद्यात् पंचशतानि च ॥

संक्रमः जलोपरिगमनार्थं तिरःकाष्ठादिबंधः साकव इति प्रसिद्धः। ध्वजो देवस्य गरुडध्वजादिः। यष्टिर्हट्टादेश्चिह्नभूता। प्रतिमा देवस्य प्रतिकृतिः। प्रतिकुर्यात्पूर्ववत्कुर्यात्। एतदन्यतमस्य यो विनाशं करोति स पंचशतानि दंड्यः। विष्णुः॥ अभक्ष्यस्याविक्रेयस्य विक्रयी देवप्रतिमाभेदकश्च उत्तमसाहसं दंड्यः॥ शंखः॥ आरामप्रपाकूपसंक्रमध्वजसेतुनिपानभंगेषु तत्समुत्थानं प्रतिसंस्कारोऽष्टशतं च॥ निपानं कूपादिसमीपे पशूनां जलपानस्थानं एतेषां सप्तानामन्यतमभंगे कृते तत्कर्त्रा आरामादेः पुनः सज्जीकरणं कार्यं अष्टशतपणाश्च तस्य दंड इत्यर्थः। कात्यायनः।

हरेद्भिद्याद्दहेद्वापि देवानां प्रतिमां यदि।
तद्गृहं चैव यो भिंद्यात्प्राप्नुयात् पूर्वसाहसं ॥

अत्र प्रतिमायुत्कर्षापकर्षाभ्यां दंडविकल्पः परिस्थापनीय इति मिश्राः । हन्यादित्यनुवृत्तौ विष्णुः ॥ सेतुभेदकश्च ॥ इदं तु महासेतुविषयं । मनुः ।

यस्तु पूर्वनिविष्टस्य तडागस्योदकं हरेत् ।
आगमं चाप्यपां भिन्द्यात् स दाप्यः पूर्वसाहसं ।

पूर्वनिविष्टस्य पूर्वस्थितस्य स्नानादावुपयुक्तस्येति यावत् । आगमो येन वर्त्मना तडागः पयसा पूर्यते तं यो भिंद्यात् निरुंध्यात् तस्य पूर्वसाहसो दंडः । याज्ञवल्क्यः ॥

क्षेत्रवेश्मवनग्रामविवीतखलदाहकाः ।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना ॥

क्षेत्रादीनां षण्णामन्यतमस्यापि दाहको भूपभार्यागामी वा वीरणाग्निना दाहयितव्यः । मनुः ।

प्राकारस्य च भेत्तारं परिखानां च पूरकं ।
द्वाराणां चैव भेत्तारं क्षिप्रमेव प्रमापयेत् ॥

नगराद्याश्रयस्य प्राचीनस्य परिखाया द्वारस्य वा नाशकं त्वरया मारयेत् । तथा ।

अवध्यं यश्च बध्नाति वध्यं यश्च प्रमुंचति ।
संप्राप्तव्यवहारं च स दाप्यो दममुत्तमम् ॥

योऽविकृतः अवध्यं अनपराधित्वेन निर्णीतं बध्नाति वध्यं सापराधित्वेन निर्णीतं त्यजति । अपराधित्वेन निरपराधित्वेन वा निर्णीतं यःत्यजति बध्नाति वा स सहस्रं पणान् दंड्य इत्यर्थः । विष्णुः ।

दंड्यमुन्मोचयन् दंडाद्द्विशतं दंडमाहरेत् ।
नियुक्तश्चाप्यदंड्यानां दंडकारी नराधमः ॥

दंडाधिकारी दंड्यमुन्मोचयन् अदंडयन् अदंड्यान् दंडयित्वा तद्दंडात् द्विगुणं दंड्यः । बृहस्पतिः ।

एकस्य बहवो यत्र प्रहरंति रुषान्विताः ।
मर्मप्रहारदोषस्तु घातकस्य उदाहृतः ॥
मर्मघाती तु यस्तेषां यथोक्तं दापयेद्दमं ।
आरंभकृत्सहायश्च दोषभाजस्तदर्द्धतः ॥
क्षतस्याल्पमहत्त्वं च मर्मस्थानं च यत्नतः ।
सामर्थ्यं चानुबंधं च ज्ञात्वा चिह्नैः प्रवासयेत् ।

एकस्य मर्मघातिरूपा बहयो यत्र प्रहारं कुर्वंति तत्र मर्मघातिनमेव यथोक्तं यज्जातीयस्य प्राणिनो घातकतामाविष्कृत्य यो दंड उक्तस्तं दंडं दापयेदित्यर्थः। आरंभकृतः सहायकारिणश्च प्रत्येकं तदर्द्धरूपः। क्षतस्येत्यादि मर्मघातित्वानिर्णयार्थमिदं तथा च क्षतस्य महत्त्वेन मर्मस्थत्वेन वा सामर्थ्येनाभिभावकत्वादिरूपेण अनुबंधेन पौनःपुन्येन मर्मघातित्वमवसेयमिति रत्नाकरादयः । शंखः ॥ मातापित्रोर्गुरोश्चातिक्रमेंगच्छेदः ॥ अतिक्रमस्ताडनं येनांगेन ताडयेत्तदंगस्य छेद इत्यर्थः । याज्ञवल्क्यः ।

सामान्यप्राभवद्रव्यहरणात्साहसं स्मृतं ।

---

१ सामान्यद्रव्यप्रसभहरणादिति मूलपुस्तके पाठः । तत्र सामान्यस्य साधारणस्य यथेष्टं विनियोगानर्हत्वाविशेषेण पारकीयस्य वा द्रव्यस्यापहरणं साहसं । कुतः प्रसभहरणात् प्रसह्य हरणाद्बलावष्टंभेन हरणादिति यावदिति विज्ञानेश्वरः.

तन्मूल्याद्द्विगुणो दंडो निह्नवे च चतुर्गुणः॥

सामान्यप्राभवं नानास्वामिकं हर्तुरन्यस्वामिकत्वविवक्षा तेन परद्रव्यमात्रस्य साहसे वा हृतद्रव्यान्मूल्यात् द्विगुणः तत्रैवाग्रे निह्नवे चतुर्गुण इति रत्नाकरः। मनुः।

हीनमध्योत्तमत्वेन त्रिविधं तत्प्रकीर्तितं।
द्रव्यापेक्षो दमस्तत्र प्रथमो मध्यमोत्तमौ॥
क्षेत्रोपकरणं सेतुं पुष्पमूलफलानि च।
विनाशयन्हरन्दंड्यः शताद्यमनुरूपतः॥
पशुवस्त्रान्नपानानि गृहोपकरणं तथा।
हिंसयंश्चोरयन् दाप्यो द्विशताद्यं दमं तथा॥
स्त्रीपुंगोहेमरत्नानि देवविप्रधनं तथा।
कौशेयं चोत्तमं द्रव्यमेषां मूल्यसमो दमः॥
द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः।
हर्ता वा घातनीयः स्यात् प्रसंगविनिवृत्तये॥

तत्साहसं अनुरूपतः विनाशितापहृतमूल्यानुसारेण क्षेत्रोपकरणं हलादि गृहोपकरणं शिलापट्टादि शताद्यं शतावरं। नारदः।

तस्य दंडः क्रियापेक्षः प्रथमस्य शतावरः।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पंचशतावरः॥
वधः सर्वस्वहरणं पुरान्निर्वासनांकने।
तदंगच्छेद इत्युक्तो दंड उत्तमसाहसे॥

तदयं संक्षेपः अल्पस्यापि धनस्यापहरणे विनाशने वा शताद्यो दंडः क्षेत्रसेत्वादेस्तच्चौर्येण साहसेन वा विनाश-

मे विनाशितसमं धनं चौरः साहसी वा धनस्वामिनि दाप्यः। हीनपुरुषस्तु द्विगुणं दंड्य इत्यर्थः॥ ७ ॥ ७ ॥

॥ अथ घातातकान्वेषणं ॥

तत्र याज्ञवल्क्यः।

अविज्ञातहतस्याशु कलहं सुतबांधवाः।
प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक्॥
स्त्रीद्रव्यवृत्तिकामो वा केन वायगतः सह।
तत्प्रदेशसमापन्नं पृच्छेद्वापि जनं शनैः॥

तत्प्रदेशसमापन्नं हननप्रदेशसमीपगं। अत्र चतुर्थचरणे पृच्छेद्वापि शनैःशनैरिति विवादरत्नाकरे पाठः। बृहस्पतिः।

हतः संदृश्यते यत्र घातकश्च न दृश्यते।
पूर्ववैरानुसारेण ज्ञातव्यः स महीभुजा॥
प्रतिवेश्यानुवेश्यौ च तस्य मित्रारिबांधवाः।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः॥
विज्ञेयो ऽसाधुसंसर्गाच्चिह्नहोढेन वा नरैः।
एषोदिता घातकानां तस्कराणां च भावना।
गृहीतः शंकया यस्तु न तत्कार्यं प्रपद्यते॥
शपथेन विशोद्धव्यः सर्ववादेष्वयं विधिः।

होढो निगदितः। शंकया इत्यत्र शंकित इति पाठो रत्नाकरे दृष्टः। तत्कार्यं हननरूपं न प्रपद्यते पृष्टः सन्नानुमन्यते। विवादचिंतामणिधृतो व्यासः।

ज्ञात्वा तु घातकं सम्यक् ससहायं सबांधवं।

हन्याच्चित्रैर्वधोपायैरुद्वेगजनकैर्नृपः ॥

बृहस्पतिः ।

दिव्यैर्विशुद्धो मोच्यः स्यादशुद्धो वधमर्हति ।
निग्रहानुग्रहाद्राज्ञः कीर्तिर्धर्मश्च वर्द्धते ॥

असाधुनिग्रहात्साधोश्चानुग्रहणाद्राज्ञः कीर्तिधर्मयोरुपचयो भवतीत्यर्थः । रत्नाकरप्रभृतयो ऽप्येवं ।

इति विद्वद्भिरचिते विवादार्णवसेतुके ।
साहसे दडभेदाद्यैरूर्मिः सप्तदशी गता ॥ १७ ॥

---

अष्टादशोर्मिः।

## ॥ अथ स्त्रीसंग्रहणं ॥

तत्र व्यासः ।

संग्रहस्त्रिविधो ज्ञेयः प्रथमो मध्यमस्तथा ।
उत्तमश्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥

तदेवाह स एव ।

अदेशकाले संभाषा अरण्ये च परस्त्रिया ।
अपांगप्रेक्षणं हास्यं पूर्वं संग्रहणं स्मृतं ॥

सर्वमिदं रिरंसयेति बोध्यमेवं परत्रापि । बृहस्पतिरपि ।

अपांगप्रेक्षणं हास्यं दूतीसंप्रेषणं तथा ।
स्पर्शो भूषणवस्त्राणां प्रथमः संग्रहः स्मृतः ॥

नारदः ।

परस्त्रिया सहाकाले अदेशे पूरुषस्य तु ।
स्थानसंभाषणामोदास्त्रयः संग्रहणक्रमाः ॥
नदीनां संगमे तीर्थे आरामेषु वनेषु च ।

स्त्रीपुंसो यत्समीयातां तच्च संग्रहणं स्मृतं ॥
दूतीसंप्रेषणैर्वापि लेखसंप्रेषणैरपि ।
अन्यैर्वापि व्यभीचारैराद्यं संग्रहणं स्मृतं ॥

अकालादेशौ व्याख्यातार्थौ स्थानमेकत्र स्थितिः आमोदः परीहासः वनमारामादन्यत् संग्रहमिति सम्यक् गृह्यते तदनुरक्ततया प्रमीयते आशयो येन तत्संग्रहणं अनन्यथासिद्धपरस्त्रीसंलापादि तेन कर्मणा वचसा च परस्परानुरक्तावनुमीयेते अनन्यथासिद्धत्वबलादेवाज्ञतया ऋजुतया कार्यौत्सुक्यादिना अन्यथाभिसंधिना वा कृतः संलापादिर्न संग्रहणं । एतत्परमेव मनुवचनमपि ।

भिक्षुका वंदिनश्चैव दीक्षिताः कारवस्तथा ।
संभाषणं गृहे स्त्रीभिः कुर्युरप्रतिवारिताः ॥

इति। वंदिनःस्तावकाः दीक्षिताः संजातदीक्षाः कारवः शिल्पिनः अप्रतिवारिताः अनिषिद्धाः । तथा च येन व्यापारेणात्मचित्तं स्खलितमनुमीयते तदाद्यं संग्रहणमिति वर्तुलार्थः । मध्यमे त्वाह बृहस्पतिः ।

प्रेषणं गंधमाल्यानां फलधूपान्नवाससां ।
संभाषणं च रहसि मध्यमं संग्रहं विदुः ॥

व्यासोपि ।

प्रेषणं गंधमाल्यानां धूपभूषणवाससां ।
प्रलोभनं चान्नपानैर्मध्यमः संग्रहः स्मृतः ।

संभाषणमिति पूर्वापेक्षयातिशयितमभिमतं । गंधेत्यादि अस्य द्रव्यव्ययरूपतया पूर्वापेक्षया अधिकत्वमिति

भावः। उत्तमे पुनराह विवादचिंतामणिविवादरत्नाकरयोर्बृहस्पतिः।

एकत्र शयनं क्रीडा चुंबनालिंगने तथा।
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः॥

निगदव्याख्यानमेतत्। व्यासः।

शय्यासने विविक्ते तु परस्परमुपाश्रयः।
केशाकेशिग्रहश्चैव ज्ञेय उत्तमसंग्रहः॥

चंडेश्वरधृतो मनुरप्याह।

उपकारक्रिया केलिः स्पर्शो भूषणवाससां।
सहशय्यासनं चैव सर्वं संग्रहणं स्मृतं॥
स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्पयेत्तथा।
परस्परस्यानुमते सर्वं संग्रहणं स्मृतं॥

उपकारक्रिया हिताचरणक्रिया उपचारेति क्वचित्पाठः। तत्र स्रग्गंधानुलेपनतांबूलादिप्रेपणमर्थः केलिर्नर्म संग्रहणमुत्तमामिति शेषः। प्रतिलोमे संग्रहे तु मनुः।

अब्राह्मणः संग्रहणे प्राणांतं दंडमर्हति।

इदं तु उत्तमसाहसविषयं। शंखलिखितौ॥ येन येनांगेनापराधं कुर्यात्तस्य च्छेत्तव्यमष्टसहस्रं वा अन्यत्र ब्राह्मणाददंड्यो हि ब्राह्मणः॥ वाशब्दोऽत्र व्यवस्थितविकल्पकस्तेन उत्तमाया नीचेन मध्यमसंग्रहे गच्छेदः। प्रथमसंग्रहे चाष्टसहस्राणीत्यर्थः इति लक्ष्मीधरः।

१ स्त्रद्रुमनुचिते स्तनजघनादिदेशे स्त्रियं स्पृशेत् तथा या वृषणादिके स्पृष्टः क्षमते तदान्योन्यमंगीकरणे सर्वं संग्रहणमिति कुल्लूकभट्टः।

अदंड्यः शारीरदंडानर्हो ब्राह्मण इति रत्नाकरः ।

त्रयाणामपि चैतेषां प्रथमो मध्य उत्तमः ।
विनयः कल्पनीयः स्यादधिको द्रविणाधिके ॥

एषु त्रिषु संग्रहेषु यथाक्रमं प्रथममध्यमोत्तमसाहसा दंडाः अधिकधनस्य त्वधिको दंड इत्यर्थः । एवंप्रकाराणि बहूनि विवादरत्नाकरधृतानि कात्यायनादिवचनानि नातिप्रयोजनकतया ग्रंथबाहुल्यभिया च न लिखितानि । सांप्रतममीषां दंडो ऽभिधीयते । तत्राह बृहस्पतिः॥

परपत्न्या तु पुरुषः संभाषां योजयन् रहः ।
पूर्वमाक्षारितो दोषैः प्राप्नुयात्पूर्वसाहसं ॥

यया सह पूर्वं यस्याभिलापोऽभूत्तया सह रहस्यनौचितीवादादधिकं आलापमात्रं कुर्वाणः पूर्वसाहसं दंड्य इत्यर्थः । मनुः ।

यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् ।
न दोषं प्राप्नुयात्किंचिन्न हिं तस्य व्यतिक्रमः।

अनाक्षारिते निमित्तवशादौचितीवादादधिके ऽप्यालापे न दोष इत्यर्थः । अनाक्षारितस्यापि निर्जने परस्त्रिया सह संलापे दोष एवेत्याह स एव ।

परस्त्रियं यो ऽभिवदेत्तीर्थेऽरण्ये गृहे ऽपि वा ।
नदीनां वापि संभेदे स संग्रहणमाप्नुयात् ॥
न संभाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत् ।
निषिद्धो भाषमाणस्तु सुवर्णं दंडमर्हति ॥

निषिद्धः तस्याः पत्यादिना निवारितः । याज्ञवल्क्यः ।

स्त्री निषेधे शतं दंड्या द्विशतं तु दमं पुमान्।
प्रतिषेधे तयोर्दंडो यथा संग्रहणे तथा॥

स्त्री चेन्निवारिता पुरुषेण सममालपति तदा शतं पणान्दंड्या पुरुष एव चेन्निवारितः स्त्रिया सहालपति तदा द्वे शते पणान् दंड्यः। उभावपि निवारितौ चेत् परस्परमालपतस्तदा द्वौ प्रत्येकं प्रथमसाहसं दंड्याविरत्यर्थः। एवमेव विवादरत्नाकरविवादचिंतामणिप्रभृतयः। मनुः।

किंचिदेव हि दाप्यः स्यात्संभाषां ताभिराचरन्।
प्रेष्यासु चैकभक्तासु रहः प्रव्रजितासु च॥

ताभिश्चारणदाराभिः तदुपक्रम्यैवैतस्याभिधानात्। अनुपदं व्यक्तीभविष्यति चेदं। एकपुरुषाश्रितया स्वप्रेष्यया तापस्या वा रहसि सहालपन्किंचिदेव सुवर्णतो न्यूनं दमं दाप्य इत्यर्थः। रत्नाकरादयोप्येवं। मात्स्ये।

यस्तु संचारकस्तत्र पुरुषः स तथा भवेत्।
पारदारिकवद्दंड्यो यश्च स्यादवकाशदः।

संचारकोऽभिसारयिता अवकाशदोऽभिसारस्थानदाता। तथा च यः स्त्रियं पुरुषं वाभिसारस्थानं प्रापयति यो वा स्त्रीपुरुषयोरभिसारस्थानदाता तावुभौ पारदारिकवद्दंड्यावित्यर्थः। अनियतभर्तृकायास्तु संग्रहणे दंडो नायमित्याह मनुः।

नैष चारणदारेषु विधिर्नात्मोपजीविषु।
सजूयंति हि ते नारीं निगूढाश्चारयंति च॥

चारणो नटः। " भार्य्या पुत्रः स्विका तनुः " इत्यादिस्मरणादिह आत्मा भार्या तेन आत्मानं भार्यां जीवनार्थमुपजीवति आत्मोपजीवी शैलूषादिः एतौ हि स्वस्त्रियमप्यलंकृत्य व्यभिचारयत इत्यतो नैतत्संग्रहे दंडः। यदि तु ताभिरपि निगूढः संभाषणं कुरुते तदा दंडलेशं दाप्य इत्युक्तं "किंचिदेव हि दाप्यः स्यात्" इत्यनेन प्राक्। एवमेव रत्नाकरः। अभिगमदंडस्त्वत्रापि स तु वंध्यक्यभिगमनप्रकरणे वक्ष्यते। नारदः।

नाथवत्या परगृहे संयुक्तस्य स्त्रिया सह।
दुष्टं संग्रहणं तज्ज्ञैर्नागतायाः स्वयं गृहे॥

नाथवत्या सह तावत्संग्रहणं दुष्टं दंड्यतावीजं यदि सैव संग्रहीतुर्गृहं स्वेच्छया समागत्य संग्राहयति तदा तदपि न दुष्टमित्यर्थः। आपस्तंबः॥ अबुद्धिपूर्वमलंकृतो युवा परदारानुपविशन् कुमारीं वा चावध्यो बुद्धिपूर्वं तु दंड्यः॥ अस्यार्थः। यद्यदुष्टाशय एव युवाऽज्ञानादलंकृतः परस्त्रियाः परकन्यायाश्च समीपमुपसर्पति तदा स राज्ञाऽवध्योऽभर्त्सनीयः। यदि तु दुष्टभाव एव तथा कुरुते तदा वित्तानुसारेण दंडनीयः॥ ५॥

॥ अथाभिगमदंडः॥

तत्राह बृहस्पतिः।

सहसा कारयेद्यस्तु धनं तस्याखिलं हरेत्।
उत्कृत्य लिंगवृषणौ भ्रामयेद्गर्दभेन तु॥
छद्मना कारयेद्यस्तु तस्य सर्वहरो दमः।

अंकयित्वा भगांकेन पुरान्निर्वासयेत्ततः ॥
दमोऽतिमः समायां तु हीनायामर्द्धिकस्ततः।
पुंसः कार्यो ऽधिकायां तु गमने संप्रमापणं ॥

यःसहसाचलेन परस्त्रियमनिच्छंतीमेवाभिगच्छति तस्य सर्वस्वं गृहीत्वा लिंगवृषणौ छित्वा गर्दभेन भ्रामणं कारयेत्। इदं तु बलच्छलाभ्यां समानायां। नीचायां गमने त्वर्धम्। उत्तमायां गमने 'पुंसः कार्य' इत्यादिना विशेषस्य वक्ष्यमाणत्वात्। यस्तु छद्मना च्छलेन परस्त्रियमनिच्छंतीमेवाभिगच्छति तस्य सर्वस्वमादाय भगांकेनांकयित्वा पुरान्निर्वासनं दंडः। यस्तु बलच्छले विहाय दूतादिप्रेषणद्वारा समानजातीया परस्त्रियं गच्छति तस्यांतिमः उत्तमसाहसो दंडः। हीनवर्णा तु बलच्छले विहाय दूतादिप्रेषणद्वारा गच्छतो मध्यमसाहसो दंडः। उत्कृष्टजातीयां तु दूतादिप्रेषणद्वारा बलच्छलाभ्यां गच्छतो मारणमेव। नार्या अपि कर्णादिकर्त्तनं वक्ष्यमाणयाज्ञवल्कीयादित्यर्थः। विवादरत्नाकरे आपस्तंबः॥ सन्निपाते शिश्नस्य च्छेदनं वृषणस्य॥सन्निपातेऽभिगमे। एतदपि प्रागुक्तविषयं। कात्यायनः।

स्त्रीषु वृत्तोपयोगः स्यात्प्रसह्य पुरुषो यदा।
वधस्तत्र प्रवर्त्तेत कार्यातिक्रमणं हि तत्॥

स्त्रीषु उत्कृष्टजातीयासु वृत्तोपयोगो जाताभिगमः। प्रसह्य हठेनेति रत्नाकरः। विवादचिंतामणौ याज्ञवल्क्यः।

सजातावुत्तमो दंड आनुलोम्ये तु मध्यमः।

प्रातिलोम्ये वधः पुंसो नार्य्याः कर्णादिकर्त्तनं ॥

रक्षितसजातीयसकामपरस्त्रीगमने ब्राह्मणादीनामुत्तमो दंडः। मातृष्वस्रादीनां गमने तु वध एव वक्ष्यते। अरक्षितानुलोम्यागमने तु मध्यमः।वक्ष्यमाणमनुवचनात्।रक्षितानुलोम्यागमने तूत्तमसाहसः। 'सहस्रं ब्राह्मणो दाप्य' इत्यादिवक्ष्यमाणमनुवचनात्। प्रतिलोमगमने वध इत्यर्थः। तेन बृहस्पतिवाक्येपि पुंसः प्रमापणं स्त्रियाः कर्णकेशच्छेदनेन महद्रष्टव्यमिति मिश्राः।कर्णादीत्यादिशब्दः केशादिपरः॥विष्णुः।पारजायी सवर्णागमने तु उत्तमसाहसं दंड्यः हीनवर्णागमने मध्यमं गोगमने अंत्यागमने वा वधः उत्तमागमने च ॥ पारजायी पारदारिकः अंत्यागमने अस्पृश्यागमने। मनुः।

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमाविशन्।
अगुप्तैकांगसर्वस्वैर्गुप्ते सर्वेण हीयते ॥
वैश्यः सहस्रं दंड्यः स्यात्संवत्सरनिरोधतः।
सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ॥
ब्राह्मणीं यद्यगुप्तां तु सेवेयातामिति स्थितिः।
गुप्तां चेच्छूद्रवद्दंड्यो दग्धव्यो वा कटाग्निना॥

द्वैजातं वर्णं द्विजातिस्त्रियं आविशन् अधिगच्छन् अगुप्तैकांगसर्वस्वैः अगुप्तायामेकांगेन शिश्नरूपेण सर्वस्वेन च हीयते 'आर्य्यस्त्रीगमने लिंगोद्धार' इति वचनैकवाक्यत्वात्। सर्वेण अंगेन सर्वस्वेन च सर्वस्वहरणं गुप्तां चेत् वधोधिक इति रत्नाकरः। कुल्लूकभट्टस्तु भर्त्रादिर-

क्षितामरक्षितां वा द्विजातिस्त्रियं यदि शूद्रो गच्छेत्तद्रक्षारहितां गच्छन् लिंगसर्वस्वाभ्यां वियोजनीयः। अत्रांगविशेषाश्रवणेपि "आर्यस्त्र्यभिगमने लिंगोद्धारःसर्वस्वहरणं गोप्ता चेद्वधोऽधिकः" इति गौतमवचनाल्लिंगच्छेदः। रक्षिता मैथुनं गच्छन् शरीरधनहीनः कर्त्तव्य इत्याह। अगुप्तब्राह्मणीगमने वैश्य संवत्सरं बध्वा सहस्रेण दंड्यः। क्षत्रियस्तु सहस्रं दंड्यो मूत्रेण शिरोभिषेच्य मुण्डनीयः। गुप्ता चेदिति रक्षितां ब्राह्मणीं गच्छतोर्वैश्यक्षत्रिययोः शूद्रवद्दंडो दाहो वा कटाग्निना। तथा चंडेश्वरधृतो मनुः।

क्षत्रियायामगुप्तायां वैश्ये पंचशतो दमः।
मूत्रेण मौण्ड्यमृच्छेत्तु क्षत्रियो दंडमेव वा।

यदि क्षत्रियः परक्षत्रियामगुप्तां संगच्छेत्तदा मूत्रेण मौण्ड्यं यद्वा वैश्यवत्पंचशतं पणान् दंड्य एवेति विवादरत्नाकरः। लक्ष्मीधरेण तु दण्डमेव वेत्यत्र मौण्ड्यमेव वेति पठितं। नारदः।

माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा॥
दुहिताचार्यभार्या च सगोत्रा शरणागता।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या॥
आसामन्यतमां गत्वा गुरुतल्पग उच्यते।
शिश्नस्योत्कर्तनात्तत्र नान्यो दंडो विधीयते॥

मातात्र जननीव्यतिरिक्ता पितृपत्नी सगोत्रेति शर-

णागताया विशेषणं । एवं धात्रीत्यत्रापि तथेति बोद्धव्यम् । अतो 'न बालधात्रीं स्वदासीं चे' ति प्रागुक्तेन विरोध इति विश्वरूपः । याज्ञवल्क्यः ।

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥
छित्त्वा लिंगं वधस्तस्य सकामायाः स्त्रियस्तथा ।

सकामाया इति उक्तानां षण्णां मध्ये यथोक्तं प्रतियोगिनं या सकामा रमयति तस्या अपि लिंगच्छेदनपूर्वकं वधो दंड इत्यर्थः । व्यासः ।

गुप्तायाः संग्रहे दंडो यथोक्तः परिकीर्तितः ।
इच्छंत्यामागतायां तु गच्छतोऽर्द्धदमः स्मृतः ॥

यथोक्त उत्तमसाहसरूपः । एष स्वर्द्धदंडः । क्लीबाद्भिभार्याव्यतिरिक्तासु यथानुगमावृत्तौ । विष्णुः ।

अदुष्टत्यक्तदारस्य क्लीबस्याक्षमकस्य च ।
सेच्छानुपेयुषो दारान्न दोषः साहसे भवेत् ॥

सेच्छान्दारानुपेयुष इत्यन्वयः । तेन, क्लीबस्याक्षमस्य वा सेच्छान्स्वच्छंदान् तथा अदुष्टत्यक्तदारस्य दारानुपेयुषः उपगच्छतः पुरुषस्य न दंड इत्यर्थः । मनुः ।

सहस्रं ब्राह्मणो दंड्यो गुप्तां विप्रां बलाद्व्रजन् ।
शतानि पंच दंड्यः स्यादिच्छन्त्या सह संगगः ॥
मौण्ड्यं प्राणांतिको दंडो ब्राह्मणस्य विधीयते ।
इतरेषां तु वर्णानां दंडः प्राणांतिको भवेत् ॥
वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।

यो ब्राह्मण्यामगुप्तायां तत्समं दंडमर्हतः ॥
*शूद्रायां क्षत्रियविशोः साहलं वै भवेद्दमः ॥*

बलादिति दंड्य इत्यन्वयि अतो '*दमोतिमः समायामि*'ति बृहस्पतिवाक्येन सजातौ उत्तमो दंड इति याज्ञवल्क्यवाक्येन पारजायी सवर्णागमने उत्तमसाहसमिति विष्णुवाक्येन च विरोध इति विश्वरूपः। मौंड्यमिति यत्राभिगमने प्राणांतिको दंड उक्तः तत्र ब्राह्मणस्य शिरोमुंडनमेव दंडः दंडमर्हत इत्यत्र दंडो मध्यमसाहसः वैश्यस्य निर्गुणक्षत्रियागमने। अन्यथा तत्रापि सहलं दंड इति मिश्राः। अयं च दंडः सगुणवैश्यस्यात्यंतनिर्गुणक्षत्रियागमने *अन्यथा वधः अतः 'पुंसः कार्योऽधिकायामि*'त्यनेन 'प्रातिलोम्ये वधः पुंस'इत्यनेन गोगमने अंत्यागमे उत्तमागमने चे'त्यनेन 'वैश्यो राजन्यायां मैथुनमाचरन्नि'त्यनेन च न विरोध इति प्राहुः। गुप्तामित्यस्य क्षत्रियामित्यनेनान्वयः। गुप्ताया गमने वधस्योक्तत्वादित्यपि केचित् ॥ इदानीं वधे प्रकार उच्यते ॥ बौधायनः ॥ शूद्रं कटाग्निना दहेत् ॥ द्विजस्त्रीगमने इति शेषः। ब्राह्मणीं गंतारमित्यनुवृत्तौ यमः।

शूद्रं तु घातयेद्राजा शयने तप्त आयसे।
दहेत् पापकृतं तत्र काष्ठैः पर्णैस्तृणैस्तथा ॥

हारीतः ॥ श्रेयसः शयनशायिनं राजा वध्वा श्वभिः खादयेत् काष्ठैर्वैनां दाहयेत् ॥ श्रेयसः उत्कृष्टवर्णस्य शयनशायिनं स्त्रीगामिनं एनामुत्कृष्टवर्णस्त्रियं। गौतमः ॥

णागताया विशेषणं । एवं धात्रीत्यत्रापि तथेति बोद्धव्यम् । अतो'न बालधात्रीं स्वदासीं चे'ति प्रागुक्तेन विरोध इति विश्वरूपः । याज्ञवल्क्यः ।

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥
छित्त्वा लिंगं वधस्तस्य सकामायाः स्त्रियस्तथा ।

सकामाया इति उक्तानां षण्णां मध्ये यथोक्तं प्रतियोगिनं या सकामा रमयति तस्या अपि लिंगच्छेदनपूर्वकं वधो दंड इत्यर्थः । व्यासः ।

गुप्तायाः संग्रहे दंडो यथोक्तः परिकीर्तितः ।
इच्छंत्यामागतायां तु गच्छतोऽर्द्धदमः स्मृतः ॥

यथोक्त उत्तमसाहसरूपः । एष स्वर्द्धदंडः । क्लीबादिभार्याव्यतिरिक्तासु यथानुगमावृत्तौ । विष्णुः ।

अदुष्टत्यक्तदारस्य क्लीबस्याक्षमकस्य च ।
सेच्छानुपेयुषो दारान्न दोषः साहसे भवेत् ॥

सेच्छान्दारानुपेयुष इत्यन्वयः । तेन, क्लीबस्याक्षमस्य वा सेच्छान्स्वच्छंदान् तथा अदुष्टत्यक्तदारस्य दारानुपेयुषः उपगच्छतः पुरुषस्य न दंड इत्यर्थः । मनुः ।

सहस्रं ब्राह्मणो दंड्यो गुप्तां विप्रां बलाद्व्रजन् ।
शतानि पंच दंड्यः स्यादिच्छन्त्या सह संगगः ॥
मौड्यं प्राणांतिको दंडो ब्राह्मणस्य विधीयते ।
इतरेषां तु वर्णानां दंडः प्राणांतिको भवेत् ॥
वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।

यो ब्राह्मण्यामगुप्तायां तत्समं दंडमर्हतः ॥
शूद्रायां क्षत्रियविशोः साहस्रं वै भवेद्दमः ॥

बध्यादिति दंड्य इत्यन्वयि अतो 'दमोंतिमः समायामि'ति बृहस्पतिवाक्येन सजातौ उत्तमो दंड इति याज्ञवल्क्यवाक्येन पारजायी सवर्णागमने उत्तमसाहसमिति विष्णुवाक्येन च विरोध इति विश्वरूपः। मौड्यमिति यत्राभिगमने प्राणांतिको दंड उक्तः तत्र ब्राह्मणस्य शिरोमुंडनमेव दंडः दंडमर्हत इत्यत्र दंडो मध्यमसाहसः वैश्यस्य निर्गुणक्षत्रियागमने। अन्यथा तत्रापि सहस्रं दंड इति मिश्राः। अयं च दंडः सगुणवैश्यस्यात्यंतनिर्गुणक्षत्रियागमने अन्यथा वधः अतः 'पुंसः कार्योऽधिकायामि'त्यनेन 'प्रातिलोम्ये वधः पुंस'इत्यनेन 'गोगमने अंत्यागमे उत्तमागमने चे'त्यनेन 'वैश्यो राजन्यायां मैथुनमाचरन्नि'त्यनेन च न विरोध इति प्राहुः। गुप्तामित्यस्य क्षत्रियामित्यनेनान्वयः। गुप्ताया गमने वधस्योक्तत्वादित्यपि केचित् ॥ इदानीं वधे प्रकार उच्यते ॥ बौधायनः ॥ शूद्रं कटाग्निना दहेत् ॥ द्विजस्त्रीगमने इति शेषः। ब्राह्मणीं गंतारमित्यनुवृत्तौ यमः।

शूद्रं तु घातयेद्राजा शयने तप्त आयसे।
दहेत् पापकृतं तत्र काष्ठैः पर्णैस्तृणैस्तथा ॥

हारीतः ॥ श्रेयसः शयनशायिनं राजा बध्वा श्वभिः खादयेत् काष्ठैश्चैनां दाहयेत् ॥ श्रेयसः उत्कृष्टवर्णस्य शयनशायिनं स्त्रीगामिनं एनामुत्कृष्टवर्णस्त्रियं। गौतमः ॥

श्वभिस्तु खादयेद्राजा हीनवर्णगमे स्त्रियं ।

अत्र श्वभिः खादयेद्राजा हीनवर्णगमने स्त्रियं प्रकाशं पुमांसं घातयेत् यथोक्तमिति पारिजातरत्नाकरयोः पाठः। तत्र यथोक्तमिति पुंसोपि वा श्वभिः खादनमिति रत्नाकरकारेण व्याख्यातं । यथोक्तं लिंगोद्धारः सर्वस्वहरणं चेति पारिजातव्याख्यानं । वशिष्ठः ॥ शूद्रश्चेद्ब्राह्मणीं गच्छेत् वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाभ्युक्ष्य नग्नां खरमारोप्य महापथमनुव्राजयेत् पूता भवतीति विज्ञायते । वैश्यश्चेद्ब्राह्मणीं गच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाभ्युक्ष्य नग्नां खरमारोप्य महापथमनुव्राजयेत् पूता भवतीति विज्ञायते। राजन्यश्चेद्ब्राह्मणीमभिगच्छेत् शरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत् । ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाभ्युक्ष्य नग्नां खरमारोप्य महापथमनुव्राजयेत्पूता भवतीति विज्ञायते ।एवं वैश्यो राजन्यायां मैथुनमाचरन् शुद्रस्तु राजन्यावैश्ययोः ॥ महापथो राजपथः । यमः ।

वृषलं सेवते या तु ब्राह्मणी मदमोहिता ।<br>
तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनां ॥<br>
वैश्यं वा क्षत्रियं वापि ब्राह्मणी सेवते तु या ।<br>
शिरसो मुंडनं तस्याः प्रयाणं गर्दभेन तु ॥

वध्यघातिनां स्थाने वध्यान् ये घातयंति चांडालादय-

स्वैरधिष्ठिते देशे इति चंडेश्वरः। बृहस्पतिः।

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना।
कामयेत्तत्र सा दण्ड्या नरस्यार्द्धदमः स्मृतः॥
छिन्ननासौष्ठकर्णां तां परिभ्राम्याप्सु मज्जयेत्।
खादयेद्वा सारमेयैः संस्थाने बहुसंस्थिते॥

तत्र सा दंड्या यः स्त्रियं प्रलोभ्य संगच्छतः पुरुषस्य दंडस्तेन दंड्या तद्दंडार्द्धं पुरुषस्य छिन्नेत्यादिना तस्या एवाधिको वैकल्पिक उक्तः। बहुसंस्थिते बहुभिराकीर्णे। एवमेव रत्नाकरः। मनुः।

भर्तारं लंघयेद्या तु स्त्री ज्ञातिबलदर्पिता।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते।

लंघयेत् पतिमवज्ञाय पुरुषान्तरं गच्छेत्। तथा च धनभ्रात्रादिसौंदर्यादिदर्पेण या पतिमवमन्य व्यभिचरेत् तां राजा लोकमध्ये कुक्कुरैः खादयेदित्यर्थः। हन्यादित्यनुवृत्तौ विष्णुः॥ स्त्रियं संसक्तभर्तृकां तदतिक्रामणीं च असक्तभर्तृकां पत्या अनुपभुक्तां तदतिक्रामणीं पुरुषांतरगामिनीं मिलितमिदं हननिमित्तं॥ बृहस्पतिः।

अनिच्छन्ती तु या भुक्ता गुप्तां तां वासयेद्गृहे।
मलिनांगीमधःशय्यां पिंडमात्रोपजीविनीं।
कारयेन्निष्कृतिं कृच्छ्रं पराकं वा समे गतां।
हीनवर्णोपभुक्ता या त्याज्या वध्याथवा भवेत्।

समे गतां समवर्णे पुरुषे संगतां। धनदंडे विशेषमाह कात्यायनः।

नास्वतंत्राः स्त्रियो ग्राह्याः पुमांस्तत्रापराध्यते ।
प्रभुणा शासनीयास्ता राजा च पुरुषं नयेत् ।

अस्वतंत्राः सस्वामिकाः स्त्रियो न ग्राह्याः न कर्षणीया न धर्त्तव्या इति मिश्राः । राजा तु पुरुषं नयेत् स्त्रीस्वामिनं पुरुषं प्रति तां प्रापयेत् । स्वामिद्वारैव तद्दंडो ग्राह्य इति तात्पर्य्यम् । तथाच विवादचिंतामणौ कात्यायनः ।

प्रोषितस्वामिका नारी प्रापिता यद्यभिग्रहे ।
तावत्सा बन्धने स्थाप्या यावत्स्यादागतः प्रभुः ॥

अभिग्रहे अभिसारनिमित्तग्रहे सति राजपुरुषैर्यदि राजगृहमानीता । मत्स्यपुराणे ।

बलात्संदूषयेद्यस्तु परभार्यां पुनः क्वचित् ।
वधदंडो भवेत्तस्य नापराधो भवेत्स्त्रियः ।

नापराध इति तु आनुलोम्ये बोध्यं । मनुः ।

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ।
सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ॥

तुल्योऽपि गमनीयासजातीय इति चंडेश्वरः । अनिच्छंतीं कन्यां अभिगच्छन् तत्सवर्णो वध्यः न त्विच्छंतीमपीत्यर्थः । एवमेव विवादचिंतामणिः ।

उत्तमां भजमानस्तु जघन्यो वधमर्हति ।
शुल्कं दद्यात्सेवमानः संप्रयच्छेत् पिता यदि ।

उत्कृष्टवर्णां कन्यामिच्छंतीं अनिच्छंतीं वा अधमवर्णोऽभिगच्छन् वध्यः तस्यास्तत्पितुश्चेच्छया तामभिगच्छ-

न्सवर्णः शुल्कं तत्पित्रे दाप्यः किंतु सा दत्तशुल्का तेनैव विवाह्या इति। तदाह नारदः।

सकामायां तु कन्यायां सवर्णे नास्त्यतिक्रमः।
किं त्वलंकृत्य सत्कृत्य स एवैनां समुद्वहेत्।

शंखः॥ समां शुल्कमाभरणं द्विगुणं स्त्रीधनं च दत्वा प्रतिपद्येत॥ समां कन्यां स्वयं रमितां शुल्काभरणस्त्रीधनानि द्विगुणानि दत्वा विवहेदित्यर्थः। मनुः।

अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः।
तस्याशु कर्त्येदंगुल्यौ दंडं चार्हति षट्शतं।

सवर्णामनिच्छंतीं कन्यां अभिभूय योनावंगुलिप्रक्षेपेण यो मैथुनवर्ती कुर्य्यात्तस्यांगुलिच्छेदः षट्शतपणं दंडश्चेत्यर्थः। सकामायामाह स एव।

सकामां दूषयंस्तुल्यो नांगुलिच्छेदमाप्नुयात्।
द्विशतं तु दमं दाप्यः प्रसंगविनिवृत्तये।

सकामामिच्छंतीं दूषयन् योनावंगुलिप्रक्षेपेण रमयन् तुल्यः सवर्णः। नारदः।

कन्यायामसकामायां व्यंगुलस्यावकर्त्तनं।
उत्तमायां वधस्त्वेयं सर्वस्वहरणं तथा॥

व्यंगुलस्य अंगुलिद्वयस्य। अंगुलीसाध्यमैथुनविषयमेतत्। येन येनांगेनापराध्नुयात्तत्तदेवास्य कर्त्तयेत् इति पारिजातः। रत्नाकरस्याप्ययमेव स्वरसः। हरिहरस्तु व्यंगुलपरिमाणलिंगच्छेद इत्याह। नारदः।

कन्यां भजंतीमुत्कृष्टं न किंचिदपि दापयेत्।

जघन्यं सेवमानां तु संयतां वासयेद्गृहे ॥
कन्यैव कन्यां या कुर्यात्तस्याः स्याद्द्विशतो दमः ।
शुल्कं च द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश ॥

भजंतीमित्यनेन सकामाऽनुगम्यते तेनानिच्छायां दंडलेशोस्तीति बोध्यमिति । कुर्यात्तयोनावंगुलिप्रक्षेपेण दूषयेत् । शिफा जटाकाररज्ज्वादिप्रहारान् इत्यर्थः । इति चंडेश्वरः ।

या तु कन्यां प्रकुर्यात् स्त्री सा सद्यो मौंड्यमर्हति ।
अंगुल्योरेव च च्छेदं खरेणोद्वहनं तथा ॥

स्त्री कन्यातियोषित् तथा च या पुनः स्त्री कन्यां तद्योनावंगुलिप्रक्षेपेण दूषयेत् सा तत्क्षणादेव शिरोमुण्डनं तदभ्यासेंगुल्योश्छेदनं गर्दभेन च राजगमनमार्गगमनमर्हतीत्यर्थ इति मिश्राः । याज्ञवल्क्यः ।

अलंकृतां हरन् कन्यामुत्तमं ह्यन्यथाऽधमं ।
दंडं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः ॥
सकामास्वानुलोम्यासु न दोषस्त्वन्यथा दमः ।
दूषणे तु करच्छेदस्तूत्तमायां वधस्तथा ॥

अलंकृतां अन्यस्मै दातुं प्रसाधितां उत्तमं साहसं अन्यथा अनलंकृतां चेत्तदा अधमं प्रथमं साहसं प्रातिलोम्ये तु उत्तमायां वधो हीनवर्णस्यान्यथेति तस्या अकामत्वे इति मिश्राः । अलंकृतामिति कन्यामलंकृतामनिच्छंतीमभिगमनार्थं हरणे उत्तमसाहसं दद्यात् । अन्यथा हरन्नधमसाहसं । तच सजातीयासु प्रातिलोम्ये तु

हर्तुर्वध एव। सकामास्विति इच्छन्तीष्वनुलोमासु इति गमनार्थं हरणे उत्तमसाहसं दद्यात् न दोषः। समानजातीयासु कन्यासु गमनवर्जं अहंकारेणांगुलिप्रक्षेपसाधनदूषणे हस्तच्छेदः। उत्तमायां वध एवेति दीपकलिका॥

॥ अथ वंधक्यादिगमनदंडः॥

तत्र बंधक्यधिकारे विवादरत्नाकरे यमः।

पारदारे सवर्णासु दंड्याः स्युः पंच कृष्णलान्।
असवर्णास्त्वानुलोम्ये दंडो द्वादशको दमः॥

पारदारे परदारगमने यवत्रयं कृष्णलः द्वादशको द्वादशपणाः। व्यासः।

बहुभिर्भुक्तपूर्वा या गच्छेयस्तां नराधमः।
तस्य वेश्यावदिच्छंति दंडनं न तु दारवत्॥

दारवत्कुलस्त्रीवत्। कात्यायनः।

कामार्ता स्वैरिणी या तु स्वयमेव प्रकामयेत्।
राजादेशेन भोक्तव्या विख्याप्य जनसन्निधौ॥

नारदः।

स्वैरिण्यब्राह्मणी वेश्या दासी निष्कामिणी च या।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः॥
आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत्।
गम्या अपि हि नोपेयाद्यतस्ताः सपरिग्रहाः॥

अस्यार्थः स्वैरिणी स्ववशा पुंश्चली तस्या विशेषणमब्राह्मणीति क्षत्रियायेति यावत्। दासी स्वीया कर्मकरी निष्कामणी कुटुंबविनिर्गता पुंश्चली गम्याः स्युरिति

दंडनिषेधमात्रं न तु पापनिषेधः । भुजिष्यासु अन्येनावरुध्य भुज्यमानासु सपरिग्रहाः परेणावरुद्धाः । चंडेश्वरधृतो याज्ञवल्क्यः ।

अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।
गम्यास्वपि पुमान् दाप्यः पंचाशत्पणिकं दमं ॥

अवरुद्धासु दासीषु अन्येनावरुध्य धृता दास्यः तासु गम्यास्वपि अनुलोमजातास्वपीति चंडेश्वरः । परावरुद्धासु दासीषु भोगार्थमवरुद्धासु सतीष्विति आनुलोम्येन गम्या अपि गच्छन् पंचाशत्पणिकं दंडं दाप्य इति दीपकलिका । व्यासोऽपि ।

परावरुद्धागमने पंचाशत्पणिको दमः ।
प्रसह्य वेश्यागमने दंडो दशपणः स्मृतः ॥

अग्याख्यागम्यमेतत् । याज्ञवल्क्यः ।

प्रसह्य दास्या गमने दंडो दशपणः स्मृतः ।
बहूनां यद्यकामासौ चतुर्विंशतिकः पृथक् ॥

असौ दासी यद्यकामा सती नैरन्तर्य्येण बहुभिर्गम्यते तदा तेषां प्रत्येकं चतुर्विंशतिपणात्मको दंडः । नारदः ।

पशुयोनावतिक्रामन् विनेयः स शतं दमं ।
मध्यमं साहसं गोषु तदेवांत्यावसायिषु ॥

अतिक्रामन्मैथुनं गच्छन् पणशतं दंड्य इति विवादचिंतामणिः । लक्ष्मीधरस्तु स दमं शतमिति विकल्पं पठति तत्र फलतो न कश्चिद्विशेषः । विवादरत्नाकरस्तु सदशं शतमिति पठित्वा दशाधिकपणशतं दंड्य इति स्या-

ख्यातवान्। नन्न समीचीनतया प्रतिभाति लक्ष्मीधराय-सम्मतत्वात्। पशून् गच्छन्निति तल्लिखितनारदवचन-विरोधाच्च। मध्यमसाहसमिदं वैश्यक्षत्रिययोः शूद्रस्य गोगमने पूर्वं वधाभिधानात्। मनुजोत्तमस्य ब्राह्मण-स्याग्रे नारदेनैव सुवर्णरूपदंडाभिधानात्। यथा नारदः।

सुवर्णं तु भवेद्दंड्यो न व्रजन्मनुजोत्तमः।
पशून्गच्छञ्शतं दंड्यो हीनांगीं चैव मध्यमं।

हीनांगी छिन्ननासादिः। विष्णुः॥ पशुगमने पणशतं दंडः॥ मत्स्यपुराणे।

तिर्यग्योनौ तु गोवर्जं मैथुनं यो निषेवते।
स पणं प्राप्नुयाद्दंडं तस्याश्च यवसोदकं॥

पणं शतसंख्यमिति चंडेश्वरः।

वेश्यागामी द्विजो दंड्यो वेश्याशुल्कसमं दमं।

यद्वेश्याभिगमने शुल्कं पंचशतपणरूपं तावान् वेश्या-भिगामिनो ब्राह्मणस्य दंडः। एवं च।

प्रसह्य वेश्यागमने दंडो दशपणः स्मृतः।

इति तु शूद्रपरमिति निर्णीयते। नारदः।

अगम्यागामिनः शास्ति दंडो राज्ञा प्रकीर्तितः।
प्रायश्चित्तविधानं तु पापानां स्याद्विशोधनं॥

चौरपारदारिकादिरहितराष्ट्रभर्तू राज्ञः प्रशंसामाह चं-डेश्वरधृतो मनुः।

यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक्।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक्॥

तथाच व्यासः ।

पूर्वोत्थानपरा दक्षा जघन्यासनशायिनी ।
अवाग्दुष्टानुकूला स्त्री भवेद्वै पुण्यकर्मणः ॥

मनुः ।

संवत्सरमुदीक्षेत द्विषतीं योषितं पतिः ।
ऊर्ध्व संवत्सरात्त्वेनां दयां कृत्वा न संवसेत् ॥

साध्व्यास्त्यागे दंडमाह चंडेश्वरधृतो नारदः ।

अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम् ।
त्यजन्भार्यामवास्थाप्यो राज्ञा दंडेन भूयसा ॥

नारदः ।

अन्योन्यं त्यजतोरागः स्यादन्योन्यं निरुद्धयोः ।
स्त्रीपुंसयोर्निगूढाया व्यभिचाराद्दते स्त्रियाः ॥
स्त्रीधनभ्रष्टसर्वस्वां गर्भविभ्रंशिनीं तथा ।
भर्त्तुश्च वधमिच्छंतीं स्त्रियं निर्वासयेद्गृहात् ॥

आगः पापं स्त्रीधनत्वेन भ्रष्टं सर्वस्वं यस्या इति विग्रहः । कल्पतरुकारस्तु स्त्रीधनत्वेन भ्रष्टं भ्रंशितं सर्वस्वं यया सा तथा भ्रष्टमित्यंतर्भूतण्यर्थकमिति वर्णयति ।

तथा ।

अनर्थजननीं नित्यं तथैवाप्रियवादिनीं ।
पूर्वाशनी च या भर्तुस्तां स्त्रीं निर्वासयेद्गृहात् ॥
वंध्यां स्त्रीजननीं नित्यं प्रतिकूलां च सर्वदा ।
कामतो नाभिनंदेत कुर्वन्नेव स दोषभाक् ॥

कुर्वन्नित्यस्याभिनंदनामित्यादिसंबन्धः । मनुः ।

ऋतुस्नाता तु या नारी भर्तारं नोपगच्छति।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं च विवासयेत्॥

मनुः।

स्वच्छंदगा च या नारी तस्यास्त्यागो विधीयते।
न चैव स्त्रीवधं कुर्यात् न चैवांगविकर्त्तनं॥
स्वच्छन्दव्यभिचारिण्या विवस्त्रं त्यागमब्रवीत्।
न वधं न च वैरूप्यं वधं स्त्रीणां विवर्जयेत्॥

न वधं न च वैरूप्यं इति अब्रवीदित्यन्वयः। पृथिवीं प्रति लक्ष्मीवाक्ये विष्णुः॥

नारीषु नित्यं शुचिभूषितासु पतिव्रतासु प्रियवादिनीषु।
अमुक्तहस्तासु प्रजान्वितासु सुगुप्तभाण्डासु बलिप्रियासु॥
सुश्लिष्टवेश्मासु जितेंद्रियासु कलिव्यपेतासु विलोलुपासु।
धर्मव्यपेक्षासु दयान्वितासु स्थिता सदाहं जगतां विधात्रि॥

बलिः पूजोपहारः कलिः कलहः विलोलुपा लोभशून्या जगतां विधात्रीति पृथिव्याः संबोधनं। शंखलिखितौ॥ स्त्री नानुक्ता बहिर्निःक्रामेत्। नानुत्तरीया परिधापयेत्॥ न चोत्सवे गंधमाल्याभरणानि विकृतानि वासांसि बिभृयात्। न परपुरुषमभिभाषेत अन्यत्र बालकप्रव्रजितवृद्धेभ्यः। न नाभिं दर्शयेत्। कुल्फपूरा गुल्फाभ्यां वासः परिदध्यात्। न स्तनौ विवृतौ कुर्यात्। न हसेदनावृतं॥ अनावृतं मुखमनाच्छाद्य। मनुः।

बाल्यया वा युवत्या वा वृद्धया वापि योषिता।
न स्वातंत्र्येण कर्त्तव्यं किंचित्कार्यं गृहेष्वपि॥

बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने ।
पुत्राणां भर्त्तरि प्रेते न भजेत्स्त्री स्वतंत्रतां ॥
पित्रा भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मनः ।
एषां हि विरहेण स्त्री गर्ह्यं कुर्याच्छुभे कुले ॥

याज्ञवल्क्यः ।

संयतोपस्करा दक्षा हृष्टा व्ययविवर्जिता ।
कुर्याच्छ्वशुरयोः पादवंदनं भर्तृतत्परा ॥

स्त्रीधर्माधिकारे विष्णुः ॥ भर्तुः समानचारित्र्यं श्वशुरगुरुदेवतातिथीनां पूजनं सुसंस्कृतोपस्करता सुगुप्तभांडता मंगलाचारतत्परता भर्तरि प्रोते प्रतिकर्म्मक्रिया परगृहेष्वनभिगमनं द्वारदेशगवाक्षेष्वनवस्थानं सर्वकर्मास्वतंत्रता बाल्ययौवनवार्द्धकेषु पितृभर्तृपुत्रपराधीनता ॥

महाभारते ।

यदैव भर्ता जानीयान्मंत्रमूलपरां स्त्रियं ।
उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ॥

शंखलिखितौ ॥ श्वःश्वः पचनभांडानामुपलेपनं स्वमृष्टगृहद्वारोपलेपनं कृतशौचानुकूल्यदध्यक्षतदूर्वाप्रवालपुष्पाहृतबलिकर्मश्वश्रूश्वशुराभिवंदनानंतरं गृहावश्यकानि कुर्यात् । न देवभृत्यातिथिभ्यो ऽग्रे ऽश्नीयात् । न भर्तुरन्यत्र प्रतीकारौषधात् ॥ श्वः श्वः आगामिन्यागामिनि दिने न भर्तुरग्रे ऽश्नीयादित्यन्वयः । अन्यत्र प्रतीकारौषधात् रोगप्रतीकारकारणमौषधं तु भर्तुरग्रेऽप्यश्नीयादित्यर्थः । मनुः ।

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनं ।
स्वप्नो ऽन्यगेहवासश्च नारीणां दूषणानि षट् ॥
सर्वाण्येतानि दूषणौपयिकानि विवक्षितानि ॥ स्वप्नो दिवास्वप्नः ।
पानाटनदिवास्वप्नमक्रियादूषणं स्त्रियाम् ।
इति बृहस्पतिवचनैकवाक्यत्वात् । अक्रिया गृहक्रियानाचरणं ॥

## ॥ अथ मृतभर्तृकाधर्मा उच्यंते ॥

तत्राह नारदः ।
मृते भर्तरि या नारी समारोहेद्धुताशनं ।
सारुंधतीसमाचारा स्वर्गलोके महीयते ॥
तिस्रः कोट्योर्द्धकोटी च यानि रोमाणि मानवे ।
तावन्त्यब्दानि सा स्वर्गे भर्तारं यानुगच्छति ॥
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ॥
तद्वद्भर्त्तारमादाय तेनैव सह मोदते ।
क्रीडते पतिना सार्द्धं यावदिंद्राश्चतुर्दश ॥
ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वापि मानवः ।
तं वै पुनाति सा नारी इत्यागिरसभाषितं ॥
साध्वीनामेव नारीणामग्निसंपतनादृते ।
नान्यो धर्मोऽस्ति विज्ञेयो मृते भर्तरि कर्हिचित् ॥
यावन्नाग्नौ दहेद्देहं मृते पत्यौ पतिव्रता ।
तावन्न मुच्यते नारी स्त्रीशरीरात्कथंचन ॥
विष्णुः ॥ मृते भर्त्तरि ब्रह्मचर्यं तदन्वारोहणं वा ॥

बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने ।
पुत्राणां भर्तरि प्रेते न भजेत्स्त्री स्वतंत्रतां ॥
पित्रा भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मनः ।
एषां हि विरहेण स्त्री गर्ह्यं कुर्याच्छुभे कुले ॥

याज्ञवल्क्यः ।

संयतोपस्करा दक्षा हृष्टा व्ययविवर्जिता ।
कुर्याच्छ्वशुरयोः पादवंदनं भर्तृतत्परा ॥

स्त्रीधर्माधिकारे विष्णुः ॥ भर्तुः समानव्रतचारित्वं श्वशुरगुरुदेवतातिथीनां पूजनं सुसंस्कृतोपस्करता सुगुप्तभांडता मंगलाचारतत्परता भर्तरि प्रोषिते प्रतिकर्मक्रियापरगृहेष्वनभिगमनं द्वारदेशगवाक्षेष्वनवस्थानं सर्वकर्मास्वतंत्रता बाल्ययौवनवार्द्धकेषु पितृभर्तृपुत्रपराधीनता ॥

महाभारते ।

यदैव भर्ता जानीयान्मंत्रमूलपरां स्त्रियं ।
उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ॥

शंखलिखितौ ॥ श्वःश्वः पचनभांडानामुपलेपनं स्वमृष्टगृहद्वारोपलेपनं कृतशौचानुकूल्यदध्यक्षतदूर्वाप्रवालपुष्पाहृतबलिकर्मश्वश्रूश्वशुराभिवदनानंतरं गृहावश्यकाकुर्यात् । न देवभृत्यातिथिभ्यो ऽग्रे ऽश्नीयात् । न भ- प्रतीकारौषधात् ॥ श्वः श्वः आगामिन्यागामिदिने न भर्तुरग्रे ऽश्नीयादित्यन्वयः । अन्यत्र प्रती- ... था । रोगप्रतीकारकारणमौषधं तु भर्तुरग्रेऽप्यश्नीयादित्यर्थः । मनुः ।

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनं ।
स्वप्नो ऽन्यगेहवासश्च नारीणां दूषणानि षट् ॥
सर्वाण्येतानि दूषणौपयिकानि विवक्षितानि । स्वप्नो दिवास्वप्नः ।
पानाटनदिवास्वप्नमक्रियादूषणं स्त्रियाम् ।
इति बृहस्पतिवचनैकवाक्यत्वात् । अक्रिया गृहक्रियानाचरणं ॥

॥ अथ मृतभर्तृकाधर्मा उच्यंते ॥

तत्राह नारदः ।
मृते भर्तरि या नारी समारोहेद्धुताशनं ।
सारुंधतीसमाचारा स्वर्गलोके महीयते ॥
तिस्रः कोट्योऽर्द्धकोटी च यानि रोमाणि मानवे ।
तावन्त्यब्दानि सा स्वर्गे भर्तारं यानुगच्छति ॥
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ॥
तद्वद्भर्त्तारमादाय तेनैव सह मोदते ।
क्रीडते पतिना सार्द्धं यावदिंद्राश्चतुर्दश ॥
ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वापि मानवः ।
तं वै पुनाति सा नारी इत्यांगिरसभाषित ॥
साध्वीनामेव नारीणामग्निसंपतनादृते ।
नान्यो धर्मोऽस्ति विज्ञेयो मृते भर्तरि कर्हिचित् ॥
यावच्चाग्नौ दहेद्देहं मृते पत्यौ पतिव्रता ।
तावन्न मुच्यते नारी स्त्रीशरीरात्कथंचन ॥
विष्णुः ॥ मृते भर्त्तरि ब्रह्मचर्यं तदन्वारोहणं वा ॥

बृहस्पतिः ।
व्रतोपवासनियता ब्रह्मचर्य्यव्यवस्थिता ।
दमदानवती नित्यमपुत्रापि दिवं व्रजेत् ॥

मनुः ।
कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयान्मृते पत्यौ परस्य तु ॥
आसीताऽऽमरणात्क्षान्ता नियता ब्रह्मचारिणी ।
यो धर्म एकपत्नीनां कांक्षंती तमनुत्तमं ॥
इति विद्वद्विरचिते विवादार्णवसेतुके ।
स्त्रीपुंधर्मस्तरंगोयमेकोनविंश ईरितः ॥ १९ ॥ ध ॥

विंशोर्मिः

## ॥ अथ द्यूतसमाह्वयः ॥

तत्राह मनुः ।
अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥

अप्राणिभिः पाशकाद्यैः । समाह्वयलक्षणं व्यक्तमाह बृहस्पतिः ।
अन्योन्यं परिगृहीताः पक्षिमेषवृषादयः ।
प्रहरन्ते कृतपणास्तं वदंति समाह्वयं ॥

मनुः ।
प्रकाशमेतत्तास्कर्य्यं यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत् ॥
द्यूतं समाह्वयं चैव यः कुर्य्याद्यश्च कारयेत् ।

तान्सर्वान्घातयेद्राजा शूद्रांश्च द्विजलिंगिनः॥

द्यूतसमाह्वयौ यः कुर्यात् यो वा सभिकः कारयेत् तेषामपराधापेक्षया राजा ताडनादिकं कुर्यादित्यर्थः।

द्यूतमेतत्पुरा कल्पे दृष्टं वैरकरं महत्।
तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान्॥
प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः।
तस्य दंडविकल्पः स्याद्यथेष्टं नृपतेस्तथा॥

दंडविकल्पो दंडप्रकारः यथेष्टं नृपतेरिच्छानुसारेण। बृहस्पतिः।

द्यूतं निषिद्धं मनुना सत्यशौचधनापहं।
तत्प्रवर्तितमन्यैश्च राजभागसमन्वितं॥
सभिकाधिष्ठितं कार्यं तस्करज्ञापकं हि तत्।
एवमेव विधिर्ज्ञेयः प्राणिद्यूतसमाह्वये॥

अस्यायमर्थः। द्यूतं तावन्मनुना निषिद्धं अन्यैस्तस्करनिरूपणार्थं तद्विहितं तदपि ससभिकं सराजपुरुषमित्यर्थः। याज्ञवल्क्यः।

द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात्।
एष एव विधिर्ज्ञेयः प्राणिद्यूतसमाह्वये॥

एकमुखं एकराजाध्यक्षप्रधानपुरुषरूपसभिकाधिष्ठितं कार्यमित्यर्थः। अस्यैव प्राणिद्यूतसमाह्वये एष एवेत्यनेनातिदेशः। बृहस्पतिः।

द्वन्द्वयुद्धेन यः कश्चिदवसादमवाप्नुयात्।
तत्स्वामिना पणो देयो यतस्तत्र निरूपितः॥

द्वंद्वयुद्धे मल्लमेषादिद्वंद्वयुद्धे अवसादं पराजयं । नारदः।

अनिर्दिष्टस्तु यो राज्ञा द्यूतं कुर्वीत मानवः।
न स तत्प्राप्नुयात्कामं विनयं चैव सोऽर्हति ॥
परिहासकृतं यच्च यच्चाप्यविदितं नृपे।
न स तं प्राप्नुयात्काममथवानुमतं तयोः ॥

अथवेति समुच्चये। बृहस्पतिः।

गूढः प्रकाशः कर्तव्यो निर्वास्याः कूटदेविनः।

गूढो द्यूतपणः स सुव्यक्तः कर्तव्यः। तथा।

सभीको ग्राहकस्तस्य दद्याज्जेत्रे नृपाय च।

याज्ञवल्क्यः।

प्राप्ते नृपतिभागे तु प्रसिद्धे द्यूतमंडले।
जितं ससभिके स्थाने दापयेदन्यथा न तु ॥

बृहस्पतिः।

कूटाक्षदेविनः पापा राजभागहराश्च ये।
सगणो वंचकश्चैव दंड्यास्ते कितवाः स्मृताः ॥

विष्णुः ॥ द्यूते कूटाक्षदेविनां करच्छेदः उपधिदेविनां सन्देशच्छेदः ॥ उपधिश्छद्म सन्दंशोऽगुष्ठतर्जन्यौ ।

कात्यायनः।

राज्ञां प्रवर्तितान्धर्मान्यो नरो नानुपालयेत्।
गर्ह्यश्च पापो दंड्यश्च लोपयन् राजशासनं।

इति विद्वद्विरचिते विवादार्णवसेतुके।
द्यूतादिना तरंगस्तु विंशोऽत्र परिकीर्तितः ॥ २० ॥

---

एकविंशोर्मिः

॥ अथ प्रकीर्णकमुच्यते ॥

तत्र तत्स्वरूपमाह कात्यायनः ।

पूर्वोक्तादुक्तशेषं यत् तत्प्रकीर्णकमुच्यते ।

तत्रादौ निधिः । मनुः ।

ममायमिति यो ब्रूयान्निधिं सत्येन हेतुतः ।
तस्याददीत षड्भागं राजा द्वादशमेव च ॥
अनृतं तु वदन्दंड्यः स्ववित्तस्यांशमष्टमं ।
तस्यैव वा निधानस्य मुख्यस्याल्पीयसीं कलाम् ।

निधिरत्र पूर्वनिखातचिरनष्टधनं। षड्भागद्वादशभागयोर्ममायमिति वक्तुर्गुणवत्त्वागुणवत्त्वाभ्यां विकल्पः निधानस्य निधेः अल्पीयसीं कलां यावत्या नावसीदति स्ववित्तस्याष्टमांशग्रहणं अल्पीयः कलाग्रहणं च सर्वस्य ज्ञानाज्ञानाभ्यां व्यवस्थेयं। स्वनिधानाद्राज्ञे द्वादशादिदानं ब्राह्मणधनवर्जं "स्वनिहिताद्राज्ञे ब्राह्मणधनवर्जं द्वादशमंशं दद्युः" इति विष्णुसूत्रात् । स्वनिधानं प्राप्तमपि राज्ञि निवेद्य ग्राह्यं ।

स्वमप्यर्थं तथा नष्टं लब्धं राज्ञि निवेदयेत् ।
गृह्णीयात्तु ततः शुद्धमशुद्धः स्यादतोऽन्यथा॥

*इति नारदीयात् । अशुद्धः स्तेयशंकया भवेदित्यर्थः ।*

॥ अथ परनिहितः ॥

अज्ञायमानं वित्तं यो ऽधिगच्छेद्राजा तस्मै अष्टमांशं दत्वा तदितरद्गृह्णीयात्। षट्कर्मसु युक्तो ब्राह्मण-

श्चेदपि गच्छेद्राजा न हरेदित्याह वसिष्ठः। अप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेदधिगंत्रेऽष्टममंशं प्रदाय ब्राह्मणश्चेदधिगच्छेत् षट्सु कर्मसु वर्तमानो न राजा हरेत् ॥ अप्रज्ञायमानं अज्ञायमानस्वामिकमस्वामिकं च। षट्कर्मातिरिक्तब्राह्मणस्य विशेषमाह गौतमः॥ निध्यधिगमे न राजा धनं ब्राह्मणस्याभिरूपस्य। अब्राह्मण आख्यात्वा षष्ठमंशं लभते इत्येके ॥ अभिरूपस्य षट्कर्मनिरतस्य अब्राह्मणोऽभिरूपब्राह्मणादन्यः आख्यात्वा कथयित्वा। ब्राह्मणस्याप्यनिवेदने दोषमाह।

ब्राह्मणोऽपि निधिं लब्ध्वा क्षिप्रं राज्ञे निवेदयेत्।
तेन दत्तं तु भुंजीत स्तेनः स्यादनिवेदने ॥

राजा निधिं लब्ध्वार्द्धं ब्राह्मणेभ्यो दद्यात् । यथा याज्ञवल्क्यः।

राजा लब्ध्वा निधिं दद्यात् द्विजेभ्योऽर्द्धं द्विजः पुनः।
विद्वानशेषमादद्यात् स सर्वस्य प्रभुर्यतः ॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्।

राजा निधिमस्वामिकं चिरनिहितं लब्ध्वा ब्राह्मणेभ्योऽर्द्धभागं दद्यात्। विद्वांस्तु ब्राह्मणः सर्वमेव गृह्णीयात्। न राज्ञे भागं दद्यात्। हेतुमाह सर्वस्य धनजातस्य प्रभुः। तथा च मनुः। 'सर्वस्वं ब्राह्मणस्येदमि'ति। परनिहितविषयमप्येतत्। यथा नारदः।

परेण निहितं दृष्ट्वा राजन्युपहरेन्निधिं।
राजगामी निधिः सर्वः सर्वेषां ब्राह्मणादृते।

इति दीपकलिका। इतरेणाविदुषा। मनुरपि।

यस्तु पश्येन्निधिं राजा पुराणनिहितं क्षितौ।
तस्माद्द्विजेभ्यो दत्वाऽर्द्धमर्द्धं कोशे निवेशयेत्॥

क्षत्रियादीनां विशेषमाह विष्णुः॥ क्षत्रियश्च चतुर्थमंशं राज्ञे दद्याच्चतुर्थमंशं ब्राह्मणेभ्यो दत्वा अर्द्धमादद्यात्। वैश्यश्चतुर्थमंशं राज्ञे दद्यात् ब्राह्मणेभ्योऽर्द्धमंशं स्वयमादद्यात्॥ ब्राह्मणेभ्योऽर्धं दद्यादित्यनुषंजनीयं। अंशं परिशिष्टं स्वयमादद्यात्। शूद्रे विशेषयति स एव॥ शूद्रश्चावाप्तं द्वादशधा विभज्य पंचांशान् राज्ञे दद्यात् ब्राह्मणेभ्योंशद्वयमेव दद्यात् अनिवेदितविज्ञानस्य सर्वस्वमादद्यात्॥ ब्राह्मणेभ्य इत्यत्रापि पञ्चांशानित्यन्वयि। मनुः।

निधानानां पुराणानां धातूनामाकरस्य च।
रक्षणादर्द्धभाग्राजा भूमेरधिपतिर्हि सः॥

पुराणानां चिरंतनानां न तु विद्यमानस्वामिदायादानां। आकरा माणिक्यादिभूमयः तत्रोत्पन्नद्रव्यमप्याकर एव। ततश्च धात्वाकरयोरन्योत्पादितद्रव्यस्यार्द्धं राजा गृह्णीयात्। याज्ञवल्क्यः।

प्ररोहिशाखिनां शाखास्कंधसर्वविदारणे।
उपजीव्यद्रुमाणां तु विंशतेर्द्विगुणो दमः॥
चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये।
जातद्रुमाणां द्विगुणो दमो वृक्षे ऽथ विश्रुते॥
गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधां।

पूर्वस्मृतादर्धदंडः स्थानेषु च विकर्त्तने ॥

प्ररोहिशाखिनो येषां शाखा अपि प्ररोहंति ते वटादयः स्कंधो यतो भागात् शाखा उदयते सर्वविदारणं मूलच्छेदनं । उपजीव्यद्रुमा येषां छायादि उपजीव्यते आम्रपिप्पलादयः । विंशतेर्द्विगुणः विंशतितः क्रमेण द्विगुणः । तथा चैतेषां शाखाच्छेदने विंशतिपणाः स्कंधच्छेदने चत्वारिंशत्पणाः मूलच्छेदने ऽशीतिपणाः दंडः इत्यर्थः । चैत्यमायतनं । विश्रुते पनसादौ गुल्मा अनतिदीर्घाः लताः मालत्यादयः गुच्छाः अवल्लीरूपाः असरलप्रकांडाः कुरुंटादयः क्षुपा ह्रस्वशाखाशिफाः शाखोटादयः लता दीर्घाः प्रतानाः कांडप्ररोहरहिताः सरलाः सारिवाप्रभृतयः । ओषध्यः फलपाकांताः कदल्यादयः वीरुधश्छिन्ना अपि या विविधं प्ररोहंति ता गुडूच्यादयः पूर्वस्मृतादर्द्धदंडः विंशतेरर्द्धः दशपणात्मको दंडः स्थानेपूक्तेषु शाखास्कन्धमूलेषु । दंड्यः इत्युपक्रम्य विष्णुः ॥ फलोपभोगद्रुमच्छेद्युत्तमसाहसं पुष्पोपभोगद्रुमच्छेदी मध्यमं वल्लीगुल्मलताच्छेदी कार्षापणशतं तृणच्छेद्येकं सर्वे तत्स्वामिना तदुपपत्तिं एकं कार्षापणं । अत्र कार्षापणः पणः 'कार्षापणः कार्षिकः स्यात्कार्षिकस्ताम्रिकः पण 'इति विवादरत्नाकरधृतवचनात् । तदुपपत्तिं दद्युरिति शेषः । वसिष्ठः ॥ फलपुष्पोपभोगात् वृक्षान्न हिंस्यात् । कर्षणार्थं योपहन्यात् गार्हस्थ्यस्यांगे च ॥ कर्षणार्थं कृषिहेतुहलाद्यर्थं वाशब्दः संभवासंभवनिमित्तकविकल्प-

परः • गार्हस्थ्यस्यांगे चेति गृहस्थकर्म दृष्टमदृष्टं वा येन गृहोपकरणं यज्ञोपकरणं च सिद्ध्यति तस्मिन्नित्यर्थः। विष्णुः॥ स्वदेशपण्याच्छुल्कांशं दशममादद्यात्। परदेशपण्याच्च विंशतितमं॥ स्वदेशे क्रीत्वा विक्रीते यावती वृद्धिः प्राप्ता तस्या दशमं भागं। परदेशे विक्रीते यावती वृद्धिः प्राप्ता तस्या विंशतितमं भागं राजा गृह्णीयादिति वाक्ययोरर्थः। गौतमः॥ विंशतिभागः शुल्कः पण्ये पुष्पौषधीनां समधुतृणेंधनानां षष्ठः॥ मूलादीनां सप्तानामपि परदेशात् क्रीत्वानीय स्वदेशविक्रीतानां वृद्धेः षष्ठांशो राज्ञा ग्राह्य इत्यर्थः। शुल्केपि मानवं श्लोकमुदाहरंति।

नाभिन्नकार्षापणमस्ति शुल्कं
न शिल्पिवृत्तौ न शिशौ न दूते।
न भैक्षलब्धे न हृतावशेषे
न श्रोत्रिये प्रव्रजिते न यज्ञे॥

अस्यार्थः। भिन्नो न्यूनः कार्षापणः पणो मूल्यं यस्य तदभिन्नकार्षापणं तेन कार्षापणादर्वाक् यस्य मूल्यं तत्र वस्तुनि शुल्को न ग्राह्यः। न शिल्पिवृत्तौ न शिल्पिना शिल्पित्वात्प्राप्तेन शिशौ विक्रय्यगवादिवत्सादौ दूते दौत्येन प्राप्ते हृतावशेषे चौरहृतावशिष्टे वणिजः शेषपण्ये श्रोत्रिये प्रव्रजिते यतौ विक्रेतरि यज्ञे यज्ञार्थमानीयमाने द्रव्ये एषु राजग्राह्यं नास्तीति। विष्णुः॥ पितापुत्रविरोधे तु साक्षिणां दशपणो दंडः यस्तयोः सांतरः तस्योत्तम-

साहसं सांतरस्तयोर्मध्यगो भूत्वा विरोधमुत्पादयेत् ॥

याज्ञवल्क्यः।

पितापुत्रविरोधे तु साक्षिणस्त्रिपणो दमः।
अंतरे तु तयोर्यः स्यात्तस्याप्यष्टशतो दमः ॥

अष्टशतः अष्टशतानि यस्मिन्सोऽष्टशतो दमः। अत्र विष्णूक्तयाज्ञवल्क्योक्तयोर्विरोधो ऽपि पितुरुत्कृष्टापकृष्टगुणाभ्यां परिहरणीयः। एवमेव रत्नाकरः। मिताक्षराकारस्तु याज्ञवल्क्यवचने चतुर्थचरणे "तस्याप्यष्टगुणो दम" इति पठित्वा पितापुत्रयोः कलहे यः साक्ष्यमंगीकरोति न पुनः कलहं वारयति स पणत्रयं दंड्यः यश्च तयोर्विवादे प्रतिभूर्भवति चकाराद्यस्तयोः कलहं कारयति सोपि त्रिपणादष्टगुणं चतुर्विंशतिपणान् दंड्य इति व्याख्यातवन्तः ॥ दंड इत्यनुवृत्तौ विष्णुः ॥ अभक्ष्येण ब्राह्मणं दूषयित्वा षोडशसुवर्णान् जात्यपहारिणा शतं सुरया ब्राह्मणं दूषयित्वा वध्यः क्षत्रियं दूषयितुस्तदर्द्धं वैश्यं दूषयितुस्तदर्द्धं शूद्रं दूषयितुः प्रथमसाहसं। अभक्ष्यं विष्ठादि जात्यपहारि सुराभिन्नं लशुनादि सुरा प्रसिद्धैव तदर्द्धं तदर्द्धमित्यनयोरव्यवहितस्तत्तत्पदार्थः शूद्रस्याभक्ष्यं कपिलादुग्धादि इदमुत्कृष्टब्राह्मणादिविषयं। याज्ञवल्क्यः।

द्विजं प्रदूष्याभक्ष्येण दंड उत्तमसाहसः।
क्षत्रियं मध्यमो वैश्यं प्रथमः शूद्रमर्द्धिकं ॥

शूद्रस्याभक्ष्यं कपिलादुग्धादि अर्द्धकं पणानां सपादं

शतं । इदमनुत्कृष्टब्राह्मणादिपरम् । मनुः ।

अभक्ष्यमयवापेयं वैश्यादीन् ग्रासयेद्द्विजान् ।
जघन्यमध्यमोत्कृष्टान् दंडानाहुर्यथाक्रमं ।
पणाः शूद्रे भवेद्दंडश्चतुःपंचाशदेव तु ।

इदमत्यधमशूद्रविषयम् । अन्यत्र याज्ञवल्क्यवचनाज्ज्ञेयम् । विष्णुः ॥ जातिभ्रंशकरस्याभक्ष्यस्य भक्षयिता विवास्यः । स्वयं लशुनादिभोक्ता ब्राह्मणो देशाद्बहिः कार्य्य इत्यर्थः ॥ शूद्रमुपक्रम्य नारदः ।

धर्मोपदेशं दर्पेण द्विजानामस्य कुर्वतः ।
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥

अस्य शूद्रस्य। गौतमः॥ अथास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रपूरणं उदाहरणे जिह्वाच्छेदः धारणे शरीरच्छेदः ॥ अस्य शूद्रस्य धारणे संस्कारजनिकायामावृत्तौ विवादरत्नाकरविवादचिंतामण्योर्याज्ञवल्क्यः ।

विप्रत्वेन तु शूद्रस्य जीवतोऽष्टशतो दमः ।

विप्रत्वेन विप्रलिंगधारणेन जीवतो जीविकां कुर्वतः । मनुः ।

यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः ।
तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ।

यस्तु शूद्रादिः क्षत्रादिचर्यया जीवति तस्य सर्वस्वहरणविवासने दम इत्यर्थः । मनुः ।

ब्राह्मणान्बाधमानं तु कामादवरवर्णजं ।
हन्याच्चित्रैर्वधोपायैरुद्वेगजनकैर्नृपः ॥

बाधमानमतिपीडयंतं । अवरवर्णजं शूद्रं चित्रैर्विचित्रैः शूलाग्निवेशनादिभिरिति यावत् । चंडेश्वरधृतः कात्यायनः ।

प्रव्रज्यावसितं शूद्रं जपहोमपरं तथा ।
वधेन शासयेत् पापं दाप्यो वा द्विगुणं दमं ॥

प्रव्रज्या संन्यासः । न च श्रुतिस्मृतिभ्यां शूद्रस्य प्रव्रज्याया अविधानात् तस्य प्रव्रज्यावसितत्वमुन्मत्तप्रलपितं स्यादिति वाच्यं । शूद्रस्य प्रव्रज्यायाः शैवागमोक्तत्वेन तस्य तद्धृतताया अपि संभवात् । चंडेश्वरेण विवादरत्नाकरे यद्यपीत्यादिना पूर्वपक्षयित्वा तथापीत्यादिना एवमेव समाहितं । द्विगुणो वधार्हस्य पाक्षिको यो दंड उक्तस्तदपेक्षयावसेयः ॥ दंडप्रशंसामाह मनुः ।

ब्रह्मतेजोमयं दंडमसृजत्पूर्वमीश्वरः ।
स राजा पुरुषो दंडः स नेता शासिता च सः ॥
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ।
दंडः शास्ति प्रजाः सर्वा दंड एव हि रक्षति ॥
दंडः सुप्तेषु जागर्ति दंडे धर्मं विदुर्बुधाः ।
यत्र श्यामो लोहिताक्षो दंडश्चरति पापहा ॥
प्रजास्तत्र विवर्द्धंते नेता चेत्साधु पश्यति ।

ब्रह्मतेजोमयं हिरण्यगर्भतेजःप्रकृतिकं । इदं स्तुतिवादाय । राजा प्रजारक्षणात् पुरुषः परमपुरुषतुल्यः प्रजा-

१ प्रजास्तत्र न मुह्यतीति मूले पाठो दृश्यते । तस्यार्थः प्रजा व्याकुला न भवतीति ।

नां हृदि स्थितत्वात् स एव स्वधर्मप्रवर्तयिता। जागर्ति चौरादिनिवारणरूपजाग्रत्कार्यकारित्वात्। यत्र श्यामो लोहिताक्षो दंडोऽधिष्ठातृदेवता चरति तत्र प्रजा विवर्द्धते नेता शासनकर्ता साधु पश्यति सम्यक् चेत् विचारयति॥ दंडप्रणयने समर्थमाह मनुः।

शुचिना सत्यसंधेन यथाशास्त्रानुसारिणा।
दंडः प्रणयितुं शक्यः ससहायेन धीमता॥
तस्याहुः संप्रणेतारं राजानं सत्यवादिनं।
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदं॥
सोऽसहायेन मूर्खेण लुब्धेनाकृतबुद्धिना।
न शक्यो न्यायतो वक्तुं व्यक्तेषु विषयेषु च॥
दंडो हि सुमहत्तेजो दुर्द्धरश्चाकृतात्मभिः।
धर्माद्विचलितं हंति नृपमेव सबांधवं॥
ततो दुर्गं च राष्ट्रं च लोकं च सचराचरं।
अंतरिक्षगतांश्चैव ऋषीन्देवांश्च पीडयेत्॥

सुमहत्तेजः सुमहद्राजप्रभावः ततः सबांधवनृपतिक्षयानंतरम्। मनुः।

यदि न प्रणयेद्राजा दंडं दंड्येष्वतंद्रितः।
अधास्काकः पुरोडाशं श्वावलेह्याद्धविस्तथा॥

अंगिराः।

राजा गुरुर्यमश्चैव शासन्धर्मेषु युज्यते।
कर्ता च मुच्यते पापात् न स पापेन युज्यते॥

मनुः।

निग्रहेण च पापानां साधूनां संग्रहेण च ।
द्विजातय इवेज्याभिः पूयंते सततं नृपाः ॥
पापास्तद्युक्ताः साधवो यथाशास्त्रवर्तिनः। याज्ञवल्क्यः।
यो दंड्यं दंडयेद्राजा सम्यक् साधूंश्च पालयेत् ।
इष्टं स्यात्क्रतुभिस्तेन सहस्रं शतदक्षिणैः ॥
इति संचिंत्य नृपतिः क्रतुतुल्यफलं पृथक् ।
व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहं ॥

तथा ।

अधर्मदंडनं लोभकरं कीर्तिविनाशनं ।
सम्यक् च दंडनं राज्ञः स्वर्गकीर्तिजयावहं ॥ ९ ॥

॥ अथ दत्तकविचारः ॥

अथ दत्तकं राजनि निवेद्य व्याहृतिभिर्हुत्वा आचारात् कांचनं हैमंतिकश्च धान्यं दत्वा चूडादिसंस्कारकं पंचवर्षान्नूर्ध्ववयस्कं बालकं पितृदत्तं तदनुज्ञया मातृदत्तं वा सति च तयोः पुत्रांतरे गृह्णीयात् । यथा ।

चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः ॥
दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ।
ऊर्ध्वं च पंचमाद्वर्षान्न दत्ताद्याः सुता नृप ॥
गृहीत्वा पंचवर्षीयं पुत्रेष्टिं प्रथमं चरेत् ।

तथा शुक्रशोणितसंभवः पुत्रो मातापितृनिमित्तकः तस्य दानविक्रयत्यागेषु मातापितरौ प्रभवतः। नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषां न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः॥ पुत्रं प्रतिगृह्णीष्य-

न्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा प्रतिगृह्णीयादिति। अत्र स्त्रिया अपि पत्यनुमत्या दानग्रहणयोः श्रुतेः व्रतप्रतिष्ठादिवत् ब्राह्मणद्वारा होमो न विरुद्धः। एवं शूद्रस्यापीति स्मार्तप्रभृतयः प्राहुः। विवादचिंतामणिकृतस्तु भर्तुरनुज्ञानेऽपि स्त्रिया न ग्रहणाधिकारः। तदंगव्याहृतिहोमबाधादिति वर्तुलार्थः। नन्वन्यत्रानुज्ञानाद्भर्तुरित्यविशेषश्रवणात् दानवद्ग्रहणेऽपि स्त्र्यधिकारसिद्धौ तदंगविद्याप्रयुक्तिरपि तस्याः कल्प्येतेति चेत्सत्यं। सहत्वेन तस्या अधिकार इष्टिवत् न पृथक्त्वेनेति वर्णयंति। नारदः।

पुत्रापराधे न पिता श्ववान् शुनि न दंडभाक्।
न मर्कटे तु तत्स्वामी तेनैव प्रहितो न चेत्॥

याज्ञवल्क्यः।

शक्तो ह्यमोक्षयन् स्वामी दंष्ट्रिणां शृंगिणां तथा।
प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं तथा॥

श्वादिस्वामी शक्तः सन् श्वादिग्रस्तं यदि न रक्षेत्तदा प्रथमं साहसं स्वीयं श्वानमपसारयेत्युक्तोऽपि न चेद्रक्षेत्तदा मध्यमं साहसं दंड्य इत्यर्थः। बृहस्पतिः।

श्रांतान्क्षुधार्तांस्तृषितानकाले वाहयेत्तु यः।
स गोघ्नो निष्कृतिं कार्यो दाप्यो वा मध्यमं दमं॥

अत्र दंडप्रायश्चित्तयोर्विकल्पदर्शनात् दंडेनापि पापक्षय इत्युक्तं भवतीति रत्नाकरादयः। याज्ञवल्क्यः।

संभूय कुर्वतामर्घं सबाधं कारुशिल्पिनाम्।

अर्घस्य हानिं वृद्धिं च सहस्रो दंड उच्यते ॥
कारवो प्रतिमाघटकाः शिल्पिनश्चित्रकारादयः तेषां सबाधमिति पीडाकरमर्घं संभूय प्रकुर्वंति ये वा राजस्थापितस्य मूल्यस्य ह्रासं वृद्धिं च संभूय कुर्वंति तेषां सहस्रपणात्मको दंड इत्यर्थः। तथा।

संभूय वणिजः पण्यमनर्घेणापरुंधतां।
विक्रीणतां वा विहितो दंड उत्तमसाहसः॥

ये वणिजो मिलित्वा स्थानांतरगतं पण्यमनुचितार्घेण हारयित्वा धारयंति ये वाऽनर्घेण बहुमूल्येनाल्पमूल्यं विक्रीणंति तेषामप्युत्तमसाहसो दंड इत्यर्थः। मनुः।

राजप्रख्यातभांडानि प्रतिषिद्धानि यानि च।
तानि निर्हरतो लोभात्सर्वहारं हरेन्नृपः॥

यानि करितुरगादीनि अतिशयराजभोग्यानि यानि वा राज्ञा निवारितक्रयविक्रयादीनि तानि राजाज्ञानावसरेण विक्रीणानस्य तद्विक्रयप्राप्तं सकलमेव धनं राजा गृह्णीयादित्यर्थः। याज्ञवल्क्यः।

अर्घ्याक्रोशातिक्रमकृत् भ्रातृभार्याप्रहारकः।
संदिष्टस्याप्रदाता च समुद्रगृहभेदकः॥
सामंतकलिकादीनामपकारस्य कारकः।
पञ्चाशत्पणिको दंड एषामिति विनिश्चयः॥
स्वच्छंदविधवागामी विक्रुष्टेऽनभिधायकः।
अकारणे च विक्रोष्टा चंडालश्चोत्तमान् स्पृशन्॥
शूद्रप्रव्रजितानां च दैवे पैत्रे च भोजकः।

अयुक्तं शपथं कुर्वन्नयोग्ये योग्यकर्मकृत् ॥
वृक्षक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकृत् ।
साधारणस्यापलापी दासीगर्भविनाशकृः ॥
पितृपुत्रसुहृद्भ्रातृदंपत्याचार्य्यशिष्यकाः ।
एषामपतितानां च त्यागी च शतदंडभाक् ॥

अर्घ्यः अर्वाहः पूजार्ह इति यावत्। स च आचार्यादिः तस्याक्रोशमतिक्रमं आज्ञालंघनरूपं वा यः करोति प्रहारस्ताडनं सन्दिष्टं प्रेषितं समुद्रं मुद्रासहितं तद्गृहविशेषणं सामंताः स्वगृहक्षेत्रादिस्थापिनः कुलिकाः सकुलजाताः आदिशब्दादन्येपि स्वग्रामोद्भूताः स्वदेशोद्भूताश्च गृह्यंते इति रत्नाकरः। स्वच्छंदेति। अनियुक्तः सन् विधवागामी। अयं तु अनियोगहेतुको दंडः। व्यभिचारहेतुकस्त्वन्य एव। विक्रुष्टे चौराद्याक्रांतैराह्वाने कृतेऽनभिधायकः शक्तिसत्त्वे प्रतिवचनादाता अयुक्तं शपथं मातरमभिगच्छामीत्यादिरूपं अयोग्यः अक्षमः शूद्रादिः योग्यकर्म यागादि। तेन यो यत्कर्म कर्तुं न शक्नोति स चेत् तत्कर्म कर्तुं प्रवर्तते तदा स दंड्यः। वृक्षस्य पुंस्त्वं फलार्जनं औषधादिना तदुपघाती क्षुद्रत्वं ह्रस्वाद्यपेक्षयेति चंडेश्वरः। साधारणेति अन्यसाधारणं धनमसाधारणीकृत्य ग्रहीता पितापुत्रयोः सुहृदोर्भ्रात्रोर्दम्पत्योराचार्य्यशिष्ययोर्मध्ये त्यागबीजदुष्कर्माभावे अन्योन्यत्यागी एतेषां पणशतं प्रत्येकं दंडः। मनुः।

न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति ।

त्यजन्नपतितानेतान् राज्ञा दंड्यः शतानि षट् ॥

स्त्री भार्य्या त्यागो विहितभरणपोषणाद्यकरणं। एता-नेव प्रकृत्य शंखः ॥ पुत्रादीन् यस्त्यजेत्कामात्स द्विशतं दंडं प्राप्नुयात् ॥ अत्र याज्ञवल्क्योक्तो दंडो विदुषोरन्यो-न्यत्यागे। मनूक्तस्तु अविदुषा एव कामादेकतरस्य वि-दुषस्त्यागे। शंखोक्तस्तु कामादविदुषैकतरस्य त्यागे इति संप्रदायः। एवं विदुषोरन्योन्यत्यागेऽप्यनयैव दिशा ज्ञेयं। विष्णुः ॥ येषां देयः पंथास्तेषामपथदायी कार्षापणानां विंशतिं दंड्यः। आसनार्हस्यासनमददच्च पूजार्हमपूज-यंश्च प्रातिवेश्यब्राह्मणनिमंत्रणातिक्रामी च निमंत्रयि-त्वा भोजनादायी च निमंत्रितस्तथेत्युक्त्वा अभुंजानःस्व-र्णमापकं निकेतयितुश्च द्विगुणमन्नं ॥ अस्यार्थः। येषां पंथा देयो भवति तेषामपथदायी पथदायी न भवती-त्यर्थः। तानाह महाभारते। अंधस्य पंथा बधिरस्य पं-थाः स्त्रियाः पंथा भारवाहस्य पंथाः। राज्ञः पंथाः ॥ एत-त्सर्वं ब्राह्मणेनासमेत्य तु ब्राह्मणस्यैव पन्थाः। प्रातिवे-श्यब्राह्मणनिमंत्रणाकारी निकेतयितुः निमंत्रयितुः। म-त्स्यपुराणे।

आमन्त्रितो द्विजो यस्तु वर्तमानः प्रतिग्रहे।
निष्कारणं न गच्छेत्तु स दाप्योऽष्टशतं दमं ॥

प्रतिग्रहार्थं निमंत्रितो विना कारणेन यो न गच्छति तस्याष्टशतपणा दंड इत्यर्थः।

तरिकः स्थलजं शुल्कं गृह्णन्दाप्यः पणान्दश।

तरिको नद्यादिसंतरणशुल्कग्रहणनियुक्तः। याज्ञवल्क्यः

जारं चौरेत्यभिवदन् दाप्यः पंचशतं दमं।
उपजीव्यधनं मुञ्चंस्तदेवाष्टगुणीकृतं॥

कुलाकीर्तिभयात् स्वरूपतो जारं चौरत्वेन निर्दिश्य जारापहृतं कुर्वन् पणानां पंचशतं दंड्यः। उत्कोचमादाय त्यजन्नुक्तोचादष्टगुणमिति विवादरत्नाकरः। तथा।

मृतांगलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा।
राजयानासनारोढुर्दंडो मध्यमसाहसः॥

*मृतांगलग्नं मृतकंबलादि तत्तथात्वेनाप्रकाश्य विक्रेतुः* ताडयितुरित्यस्य ताडनहेतोरनुपस्थिते इति शेषः। राजयानाद्यारोहणं राजाज्ञां विनेत्यर्थः। मनुः।

अभिचारेषु सर्वेषु कर्त्तव्यो द्विशतो दमः।
मूलकर्मणि चानाप्तैः कृत्यासु विविधासु च॥
अदूषितानां द्रव्याणां दूषणे भेदने तथा।
मणीनामुपरोधे तु दंडः प्रथमसाहसः॥
यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः।
तं राजा निर्द्धनं कृत्वा क्षिप्रमेव प्रवासयेत्॥

अभिचारेत्यादि अनपराधिनं प्रति सेनादिकर्तुर्मूलकर्मणि कूसैरभेषजादिप्रयोगे अनाहितैषिभिः क्रियमाणे कृत्यासु स्वायोग्यासूच्चाटनादिरूपासु कृत्यां कुर्वतो द्विशतो दमः। यत्सद्द्रव्यमेलकेन मंदीकरोति भेदनानर्हं मण्यादि भिनत्ति वा भेदार्हमपि मुक्तादि मंदप्रदेशे विध्यति वा तस्य सार्द्धशतरूपो दमः। नारदः।

अविक्रेयाणि विक्रीणन् ब्राह्मणः प्रच्युतः पथः ।
मार्गे पुनरवस्थाप्यो राज्ञा दंडेन भूयसा ॥

प्रच्युतः पथः मार्गाच्चलितः दंडेन उत्तमसाहसरूपेण । तथा च विष्णुः ॥ अभक्ष्यस्य चाविक्रेयस्य विक्रयी देवप्रतिमाभेदकश्च उत्तमसाहसं दंड्यः ॥ विवादचिंतामणौ याज्ञवल्क्यः ।

कोषाणामपहर्तृंश्च प्रतिकूलेष्ववस्थितान् ।
घातयेद्विविधैर्दंडैररीणाञ्चोपजापकान् ॥
ये कार्यिभ्योऽर्थमेवं हि गृह्णीयुः पापचेतसः ।
तेषां सर्वस्वमादाय राजा कुर्यात्प्रवासनं ॥
विनियुक्ताश्च कार्येषु हन्युः कार्य्याणि कार्यिणां ।
घनोष्मणा पच्यमानानिमांस्तान् कारयेन्नृपः ॥

कोषो राज्ञामर्थसंचयः । अरीणामुपजापकान् शत्रूणां स्वस्त्ययनादि कृतवतः कार्यिभ्यः व्यवहारिभ्यः एवं येन केनचिच्छद्मना कार्यिणामर्थिप्रत्यर्थिनां । शंखः ॥ वापीकूपतडागोदपानमार्गरसद्रव्यदूषणे अदासीदाससंप्रदानकरणे च ॥ अस्यार्थः । मार्गस्य तीक्ष्णशलाकादिना रसद्रव्यस्य विषादिना अदास्याश्च दासाय दानेन च दूषणे तत्कर्तुः प्रमापणमंगच्छेदो वा [illegible] दंडविकल्पः संकलनीयः । विवादरत्नाकरे कात्यायनः ।

राजक्रीडासु ये शक्ता राजवृत्त्युपजीविनः ।
अप्रियस्य च वक्तारो वधं तेषां प्रकल्पयेत् ॥
प्रतिरूपस्य कर्तारः प्रेक्षकप्रकराश्च ये ।

राजार्थमोपकाश्चैव प्राप्नुयुर्विविधं वधं ॥

राजक्रीडासु राजसाधारणक्रीडासु ये शक्ता राजानुमतिं विनेति शेषः। एवं राज्ञां प्रजापालनादिरूपां वृत्तिं तदनुमतिं विना य आलंबंते ये च राज्ञ एवाप्रियवदनशीलाः प्रतिरूपस्य कर्त्तारः राजानुमतिं विना राजवेषस्य कारकाः प्रेक्षकाः स्वकर्त्तव्यराजकार्यविरोधेन नृत्यादिप्रेक्षकाः प्रकरा ये दंडाख्यं राजकरं स्वभावतो निरतिशयं सातिशयीकृत्य गृह्णंति ते सर्वे नानारूपैर्वधप्रकारैर्वध्याः । वध्या इत्यनुवृत्तौ विष्णुः ॥ ये चाकुलीना राज्यमभिकामयेयुः । अकुलीनाः राज्ञो यत्कुलं तदप्रसूताः ॥ याज्ञवल्क्यः ।

न्यूनं वाप्यधिकं वापि लिखतो राजशासनं ।
पारदारिकचौरान् वा मुंचतो दंड उत्तमः ॥

राजशासनमियद्देयमियद्ग्राह्यमित्यादिमृपालेखकस्य सहस्रं पणा दंडः । शंखलिखितौ ॥ कूटशासनप्रयोगे राजशासनप्रतिषेधे कूटतुलामानव्यवहारे च शारीरांगच्छेदो वा ॥ शासनमाज्ञामकृतामपि कृतां कृत्वा प्रकाशयति राजाज्ञामतिक्रामति कूटया तुलया कूटेन वा मानेन प्रस्थादिना व्यवहरति तस्य मारणमंगच्छेदो वा अपराधोत्कर्षापकर्षाभ्यामयं विकल्पः । अंगं तु येनांगेनापराधः क्रियते तत् । मनुः ।

कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान् ।
स्त्रीबालब्राह्मणघ्नांश्च हन्यात् द्विट्सेविनस्तथा ॥

शासनं राजादेशः प्रकृतीनां अमात्यानां दूषकान् विनादोषं दोषोद्भावकरान् द्विट्सेविनो राजविरोधिसेवकान्। हलायुधधृतो नारदः।

अयुक्तं साहसं कृत्वा प्रत्यासत्तिं करोति यः।
ब्रूयात्स्वयं वा सदसि तस्यार्धविनयः स्मृतः॥
गूहमानस्तु दुःशीलं यदि वाऽतः स जीवति।
सभ्याश्चास्य न दुष्यंति तीव्रो दंडस्तु पात्यते॥

प्रत्यासत्तिर्विनयकर्तृसांनिध्यम् ब्रूयात् अथवा सदसि स्वकृतमपराधं स्वयमेव प्रकाशयति। गूहमान इति स्वयंकृतमपकर्म विनेत्रादिना पृष्टः सन्नपह्नुवानः। अतः अपकर्मणैव जीविकां करोति तदा लघुन्यप्यपकर्मणि तीव्रतरो दंडस्तस्य कार्य इत्यर्थः॥ याज्ञवल्क्यः।

विषाग्निदां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम्।
सेतुभेदकरीं चाप्सु शिलां बध्वा प्रवेशयेत्॥

विषदाऽग्निदा पुरुषघ्नी सेतुभेत्त्री वा स्त्री अगर्भा चेत्तदा शिलां बध्वा ऽप्सु प्रवेशयेदित्यर्थः॥ तथा स एव।

विप्रदुष्टां पतिगुरुनिजापत्यप्रमापणीम्।
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत्॥

विशेषतः प्रकर्षेण दुष्टां दोषवतीं तथा पत्युः पित्रादेरपत्यस्य वा मारणकर्त्रीं कर्णकरनासिकौष्ठच्छेदनपूर्वकं गोद्वारा मारयेत्। एवमेव मिताक्षराविवादचिंतामणिप्रभृतयः। विनाशमुपक्रम्य मनुः।

चर्मचार्मिकभांडेषु काष्टलोष्टमयेषु च।

मूल्यात्पंचगुणो दंडः पुष्पमूलफलेषु ह ॥

चार्म्मिकं उपानदादि प्रथमचर्मपदं स्पष्टार्थं। काष्ठमयं तंदुलादिपरिमाणपात्रं लोष्टमयं घटादि एतेषु सहसा विनाशितेषु मूल्यात् पंचगुणो दंडः । पुष्पादौ च विशेष उक्त एव विवादरत्नाकरे।

यः साहसं कारयति स दाप्यो द्विगुणं दमं।
यश्चैवमुक्त्वाहं दाता कारयेत्स चतुर्गुणं।

यश्चैवमिति एतदभियोगे यल्लगिष्यति तदहं दाता त्वं तावत् कुर्वित्युक्त्वा यः कारयति तस्य चतुर्गुणो दमः। कात्यायनः।

आरंभकृत्सहायश्च तथा मार्गानुदेशकः।
आश्रयः शस्त्रदाता च भक्तदाता विकर्मणाम्॥
युद्धोपदेशकश्चैव तथा नाशप्रवर्तकः।
उपेक्षाकार्ययुक्तश्च दोषवक्तानुमोदकः॥
अनिषेद्धा क्षमो यः स्यात्सर्वे ते कार्यकारिणः।
यथाशक्त्यनुरूपं तु दंडमेषां प्रकल्पयेत्।

अस्यार्थः। अपरमं क्रियाचिकीर्षुं ज्ञात्वा यस्तदधमं तत्साहाय्यं वा करोति तस्य तत्कर्मानुकूलपमार्गोपदेशं वा करोति अपकर्मिणं आश्रयभूतो वा तदनुकूलशस्त्रदाता वा भोजनदाता वा कृतापकर्मणस्त्राणाय तस्मै युद्धोपदेशं करोति अपकारिणि विषायर्पणेन तं परनाशाय प्रवर्तयति वा साहसिकादिना जने पीड्यमाने स्वयमक्षमोपि यः परदारान् प्रतिकरोति वा अयुक्तो राज्ञा

अनियुक्तः सन्नियुक्तवत् पीडयति वा दोषवक्ता पीडनीयस्य दोषवक्ता वा अनुमोदकः पीडकस्यानुमंता वा क्षमः सन्पीडकस्याप्रतिषेद्धा वा एते तदपराधकर्तार इव शक्त्यनुरूपं दंड्याः । विवादरत्नाकरे कात्यायनः ।

प्राणात्यये तु यत्र स्यादकार्य्यकरणं स्मृतं ।
दण्डस्तत्र तु नैव स्यादेष धर्मः स्मृतो भृगुः ॥

प्राणात्यये प्राप्त इति शेषः । अकार्यकरणं पापकर्म भृगुराहेति शेषः । कचिद्भृगोरिति पाठः स च स्फुट एव । तथा स एव ।

सद्वृत्तानां तु सर्वेषामपराधो यथा भवेत् ।
अवशेनैव दैवात्तु तत्र दंडं न कल्पयेत् ॥

अवशेन भयादिवशतः दैवात्प्रमादतः । कात्यायनः ।

आरंभे प्रथमं दद्यात् प्रवृत्ते मध्यमः स्मृतः ।
यस्य यो विहितो दंडः पर्यान्तस्य स वै भवेत् ॥

अस्यार्थः । आरंभे तत्कालावच्छिन्नकर्मकदम्बांतर्भूतिककर्म्मफलकृत्यां प्रथमः । कथितसंपूर्णदंडचतुर्थभागः । प्रवृत्ते तथाविधानेककर्मफलकृत्यां मध्यमस्तादृशदंडार्द्धरूपः । पर्यान्तस्य पर्याप्तिरुत्पादफलकसकलकर्मजनककृतिस्तद्वतः पुरुषस्य संपूर्णो दंडः । एकपापफलावच्छिन्नानेककर्माभिप्रायमिदमिति चंडेश्वरः । कात्यायनः ।

दंडनीयः स शैथिल्यात् प्रथमं नेति गौतमः ।

शैथिल्यात् दंडहेतुकर्मनिर्णयशैथिल्यात् तदनिर्णयादिति यावत् । कात्यायनः ।

समूहस्थाः प्रवृत्ताश्च पापेषु पुरुषाधमाः ।
यथोक्ताद्द्विगुणं दंडमेकैकं च प्रदापयेत् ॥

समूहस्था मिलिताः यथोक्तादेकाकिनः पुरुषस्य पापे प्रवृत्तस्य दंड उक्तस्तस्मात् । विवादरत्नाकरे नारदः ।

शारीरश्चार्थदंडश्च दंडस्तु द्विविधः स्मृतः ।
शारीरो विविधः प्रोक्तो ह्यर्थदंडो ऽप्यनेकधा ॥
शारीरस्त्ववरोधादिर्जीवितांतकरस्तथा ।
काकिन्यादिस्तु यो दंडः स तु माषपरः स्मृतः ॥

काकिन्यादिः काकिन्यवरः माषपरः माषांतः तेन यत्रापराधे काकिन्यादिरेको दंडः उक्तस्तत्रानुबंधगौरवात् सातिशये माषपर्यंत एव दंडः कार्यः । तथा स एव ।

माषावरार्द्धो यत्रोक्तः कार्षापणपरस्तु सः ।
व्यवरो ऽष्टपणस्त्वन्यस्त्ववरो द्वादशोत्तरः ॥
कार्षापणाद्या ये प्रोक्ताः सर्वे ते स्युश्चतुर्गुणाः ।
एवमन्ये ऽपि विज्ञेयाः प्राक्चैते पूर्वसाहसात् ॥

पूर्वसाहसः पणसहस्रद्वयं सार्द्धम् । तस्मात्प्राक् ये दंडविषयास्तेऽनुबंधगौरवात् पापातिशये चतुर्गुणा ग्राह्याः । पूर्वसाहसादौ चातुर्गुण्यं नास्तीति विवादरत्नाकरकारः । मनुः ।

कार्षापणं भवेद्दंड्यो यत्रान्यः प्राकृतो जनः ।
तत्र राज्ञां भवेद्दंडः सहस्रमिति धारणा ॥

कार्षापणः षोडशपणाः राज्ञामत्रांतरनृपतीनां । कात्यायनः ।

अस्पृश्यधूर्तदासानां नराणां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां ताडनं नार्थतो दमः ॥
धूर्ता मायाविनः प्रातिलोम्यप्रसूताः सूतमागधादयः । तथा स एव ।

परतंत्राश्च ये केचिद्दासत्वे ये च संस्थिताः ।
अनाथास्ते तु निर्दिष्टास्तेषां दंडस्तु ताडनं ॥
परतंत्रा भार्यापुत्रादयः संस्थिताः प्राप्ताः अनाथा अनीश्वराः निर्दिष्टा निर्धना इति रत्नाकरः । तत्रापि विशेषयति स एव ।

ताडनं बंधनं चैव तथैव च विडंबनं ।
एष दंडस्तु दासस्य नार्थदंडो विधीयते ॥
ताडनं कशाद्यभिघातः बंधनमन्यात्ख्यागम्यं विडंबनं मुंडनखरारोहादि । शंखलिखितौ ॥ शिल्पिनः कारवः शूद्रास्तेषां व्यभिचारेप्वपि शिल्पोपकरणानि रक्षेत् । तुलामानप्रतिमानसमरथानि वणिक्पथानां क्षेत्रबीजभक्तगोशकटकर्षणद्रव्याणि कर्षकाणां वाद्यभांडालंकारवासांसि रंगोपजीविनां गृहशयनालंकारवासांसि वेश्यानां शस्त्राणि वायुधोपजीविनां सर्वेषां कारणद्रव्याणि नाहार्य्याणि राज्ञा धार्मिकेण अन्या हि पुरुषाः पापबहुलाश्चाविधेयाश्च भवंति तेभ्यः पापांशभाक् राजा तस्मान्नाधनान्नानुपकरणान् कुर्य्यात् तन्मूला हि वृत्तिर्वृत्तिमूलो निवासः तैर्नियतद्भिः स्फीतं राष्ट्रमित्युच्यते ॥ अस्यार्थः । शिल्पिनश्चित्रादिकर्त्तारः कारवस्तदन्याः व्यभिचारेप्वपि

सर्वस्वापहारयोग्येष्वप्यपराधिषु तुला ऊर्ध्वमानं सुवर्णादि तुलनोपकरणं प्रतिमानं प्रस्थादि भक्तं कृषिसिद्ध्यर्थमन्नकर्षणद्रव्यं हलादि वाद्यभांडं पटहादि रंगोपजीविनां नृत्यवृत्तीनां। बृहस्पतिकात्यायनौ।

वधार्हः सुवर्णशतं दमं दाप्यस्तु पूरुषः।
अंगच्छेदार्हकस्त्वर्द्धं सन्दंशार्हस्तदर्द्धकं॥
सुवर्णशतमेकं तु वधार्हो दंडमर्हति।
अंगच्छेदे तदर्द्धं तु विवासे पंचविंशतिं॥

अंगच्छेदे विवासे इत्येतयोरर्हे इति शेषः। विवासे इत्यत्र विनाशे इति क्वचित्पाठः। तत्र तद्देशवासविनाशे इत्यर्थः। कात्यायनः।

कुलीनार्यविशिष्टेषु निष्कृष्टेष्वनुसारतः।
सर्वस्वं वा निगृह्यैतान् पुराच्छीघ्रं प्रवासयेत्॥

कुलीन उत्तमकुलोत्पन्नः। आर्यः स्वधर्मनिरतः। विशिष्टो गुणवान्। एतेषु निष्कृष्टेषु स्वल्पधनेषु वधार्हेषु अनुसारतः सुवर्णशतासंभवे इदम् अभ्यासे सर्वस्वं विवासनञ्चेति। एवमन्यत्रापि यत्र एकस्मिन्नपराधे बहुविधो दंडः श्रूयते तत्र सधनत्वनिर्धनत्वानुबंधगौरवादिना विज्ञेय इति लक्ष्मीधरः। तथा स एव।

विप्रो वधांगच्छेदार्हो निःसंगे बंधने विशेत्।
सदा कर्मवियुक्तोसौ धृतस्वस्य दमो हि सः॥

वधांगच्छेदार्हो यस्मिन्नपराधे वधोऽगच्छेदो वेति तद्वान्। विप्रो ऽत्र सदाचारनिष्ठः। निःसंगे क्रियायोगशून्ये

यत्र बद्धः सन्स्वधर्मं कर्तुं न शक्नोति स एवं सदाचारस्य दमो यत्स्वधर्मवियोजनं नाम । चंडेश्वरधृतो मनुः ।

क्षत्रविट्छूद्रयोनिस्तु दंडं दातुमशक्नुवन् ।
आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः ॥

कर्मणा अर्थनिस्तारानुकूलव्यापारेण विप्रस्तु न कर्मणाऽऽनृण्यं गच्छेत्किंतु क्रमेण दद्यादित्यर्थः । कात्यायनः ।

स्त्रीं धनं दापयेद्दंडं धार्मिकः पृथिवीपतिः ।
निर्धना प्राप्तदोषा स्त्री ताडनं दंडमर्हति ॥

अस्यार्थः । यदि धनवती स्त्री दंडार्हा तस्या धनं दंडः । यद्यधना स्त्री तथाविधा तदा तस्यास्ताडनमेव । मनुः ।

स्त्रीबालोन्मत्तवृद्धानां दरिद्राणां च रोगिणाम् ।
शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् ॥

स्त्रीबालादीनामपराधानुसारेण शिफापाटितवेणुशलाकारज्जुप्रभृतिभिस्ताडनेन राजा नियमं कुर्यादिति कुल्लूकभट्टः । ब्राह्मणमुपादिश्याह नारदः ।

भैक्ष्यहेतोः परागारे प्रवेशश्चानिवारितः ।
समित्पुष्पकुशादानेष्वस्तेयं सपरिग्रहात् ॥
नदीष्ववेतनस्तारः पूर्वमुत्तारणं तथा ।
तरेष्वशुल्कदानं च न चेद्वाणिज्यमस्य तत् ॥

भैक्ष्यहेतोः परागारे अनिवारितः प्रवेशश्च निवारणे पुनरपराध एव अस्तेयमचौर्यं अत एवानपरायः सपरिग्रहात् परिग्रहविषयसमिदादीनामप्यादानात् अवेतनः भृतिशून्यः तारः पारगमनं पूर्वं अब्राह्मणेभ्यः तरेषु पारं

प्रापणीयेषु वस्त्रादिषु अशुल्कदानं शुल्कदानाभाव.। न चेदिति। यदि अस्य ब्राह्मणस्य न वस्त्रादि वाणिज्यार्थं स्यात्तदर्थं चेत् तेषामपि शुल्कदानं विद्यत एवेति भावः। बृहस्पतिः।

लवणस्नेहमद्येषु वृद्धिरष्टगुणा स्मृता।
गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके॥

तथा स एव।

उक्ता पंचगुणा शाके बीजेक्षौ षड्गुणा स्मृता।

विष्णुः॥ संततिः स्त्रीणां दास्यादीनां गोमहिष्यादीनां च पोषणासमर्थस्य॥ कस्मैचित् क्षीरादिकं वृद्धिं व्यवस्थाप्य पोषणं सन्तत्यर्थं प्रयुक्तानां चिरकालावस्थाने संततिरेव वृद्धिरित्यर्थ इति रत्नाकर.। वसिष्ठ.॥ तुलाधृतमष्टगुण॥ तुलाधृतमपि सुवर्णादिव्यतिरिक्तं कर्पूरादिविषयम्। तेषामन्यविधवृद्धिविशेषस्योक्तत्वात्। छलगृहीतादौ वृद्धिनिषेधमाह नारद।

पण्यमूल्यं भृतिर्न्यासो दंडो यश्चाभिहारिकम्।
वृथादानाक्षिकपणा वर्द्धते नाविवक्षिता॥

आभिहारिकं छलादिना गृहीत आक्षिकपणो द्यूतेनार्जितधनं अविवक्षिताः उभाभ्यामपरिभाषिता वृद्धय.। यदि तूभाभ्यामेष्वपि वृद्धिः परिभाषिता स्यात् तदा स्यादेव। बृहस्पति.।

भुक्ते चासारता प्राप्ते मूलहानिः प्रजायते।
बहुमूल्यं या नष्टमृणिक तत्र तोषयेत्॥

: बहुमूल्यं लभ्यधनापेक्षया ।

दैवराजोपघातेन यथाधिर्नाशमाप्नुयात् ।
तत्रान्यं दापयेद्बंधं शोधयेद्वा धनं ऋणी ॥

नाशमाप्नुयात्सर्वथा व्यवहाराक्षमतां गच्छेत् । नारदः ।

रक्ष्यमाणो ऽपि चेदाधिः कालेनेयादसारताम् ।
आधिरन्यो ऽथवा कार्य्यो देयं वा धनिने धनं ॥

याज्ञवल्क्यः ।

स्रोतसापहृते क्षेत्रे राजदैवापहारिते ।
आधिरन्यः प्रदातव्यो देयं वा धनिने धनं ॥

आधिरन्य इति क्षेत्ररूपाधिर्देयः यदि तन्न ददाति तदा सवृद्धिकं धनं देयं । तथा च कात्यायनः ।

आधीकृतं तु यत्किंचिद्विनष्टं राजदैवतः ।
तदृणं सोदयं दाप्यो धनिनामधमर्णिकः ॥

यदा तु पिता सर्वथैव ऋणदानासमर्थः पुत्रस्तु समर्थस्तदा पुत्रेणैव दातव्यं । "व्याधितोन्मत्तवृद्धानां तथा दीर्घप्रवासिनाम्।" इत्यादिप्रागुक्तकात्यायनवचनात्॥ विष्णुः॥ न स्त्री पतिपुत्रकृतं॥ पतिपुत्रकृतमृणं स्त्री न दद्यादित्यर्थः । अन्यत्र यादृशं स्त्रिया देयं तत्राह याज्ञवल्क्यः ।

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।
स्वयंकृतं वा यदृणं नान्यत्स्त्री दातुमर्हति ॥
भर्त्रा पुत्रेण सार्द्धं वा केवलं वात्मना कृतम् ।
ऋणमेवंविधं दद्यान्नान्यथा तत्कृतं स्त्रिया ॥

तदन्यत् भर्तृपुत्रकृतं । यत्तूत्तमर्ण ऋणमोचनार्थमादाय-

परिभाषितं निंदितं कर्म कारयेत्तदासौ राज्ञा पूर्वसाहसं दंड्य इत्याह कात्यायनः ।

यदि ह्यादावनादिष्टमशुभं कर्म कारयेत् ।
प्राप्नुयात्साहसं पूर्वमृणान्मुच्येत वर्णिकः ।

नारदः ।

अथ शक्तिविहीनः स्यादृणी कालविपर्ययात् ।
शक्त्यपेक्षमृणं दाप्यः काले काले यथोदयं ।

शक्तिविहीन इत्यस्य ऋणं दातुमित्यादिः संबंधः।कालविपर्ययात् दुर्भिक्षादेः ।

यो यावन्निह्नवीतार्थं मिथ्या यावति वा वदेत् ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं धनं ।

योऽभियुक्त आशयदोषेण निह्नवं करोति अभियोक्ता वा मिथ्याभियोगं करोति तावुभावप्यधर्मव्यवहारिणौ नृपेण विवादविषयाद्धनात् द्विगुणं दंडनीयावित्यर्थः । इदं सधनविषयम् । दंडस्याल्पधनविषये त्वाह याज्ञवल्क्यः ।

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समं ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं हरेत् ॥

दद्यादित्यस्य ऋणमित्यादिः ।

यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत् ।
तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥

अन्यद्रव्याभावे तस्यैव कृते तद्देयमित्यर्थः । याज्ञवल्क्यः ।

दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै चान्यच्च कारयेत् ।
साक्षिमच्चेँ भवेद्यद्वा दातव्यं तत्ससाक्षिकम् ॥

समग्रदाने ऋणपत्रं पाटयेत् पत्रव्यवधाने शुद्ध्यर्थमन्यदेव लेख्यं कारयेत् । साक्षिमद्गृहीतं ससाक्षिकमेव शोध्यमिति दीपकलिका ।

विनष्टे वाप्यशरणे पितर्य्युपरतस्पृहा ।

इत्यादिवचनात् पतितधने पुत्रादेरधिकार· पतितानामपि स्वधनसाध्यप्रायश्चित्तश्रुतेः । प्रायश्चित्तविमुखानां तेषां धनानधिकारः ।

एकां स्त्रीं कारयेत् कर्म्म यथांशेन गृहेगृहे ।

मनुः ।

जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन्मातृकं ऋक्थं भगिन्यश्च सनाभयः ॥

अत्र सहोदरपदोपादानात् दत्तकेन सह भगिन्या नांशित्वमिति श्रीकृष्णतर्कालंकारः । मनुः ।

बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् ।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥

याज्ञवल्क्य· ।

बलोपधिविनिर्वृत्तान्व्यवहारान्निवर्तयेत् ।
स्त्रीनक्तमन्तरागारबहि शत्रुकृतांस्तथा ॥
मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः ।
असंबंधकृतश्चैव व्यवहारो न सिध्यति ।

उपधिश्छल इति शूलपाणिः । उपधिर्भयादिरिति वि-

ज्ञानेश्वरः। तच्चिन्त्यम्। तद्बीजं तु भीतादियोजित इत्युत्तर-वचनेन पौनरुक्त्यमिति । बहिर्बहिर्देशः । बलेन च्छलेन कृतान् स्त्रीकृतान् रात्रिकृतान् गृहमध्यग्रामबहिष्कृतान् विक्रयादीन् शत्रुकृतांश्च व्यवहारान् निवर्तयेदिति दीप-कलिका । मत्तो मद्यादिना उन्मत्तो वातादिना असंब-न्धो वादिनियुक्तव्यतिरिक्त उदासीनः । आदिशब्दात् अस्वतंत्रदासपुत्रादेर्ग्रहणं । तथाच नारदः ।

स्वतंत्रोऽपि हि तत्कार्यं कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेवाहुरस्वतंत्रस्य हेतुभिः ॥

कात्यायनः ।

न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम् ।
अज्ञाननाशितं चैव येन दाप्यः स एव तत् ।

स एवेत्यनेन पुत्रदारादिष्ववच्छेदः। यदा तु तदपराधोऽपि स्यात्तदा सोपि दाप्यः। तदुक्तं गौतमेन नाध्याभवेयुरित्यधिकृत्य ॥ निध्यन्वाहितयाचितावक्रीतादयो नष्टाः सर्वाननिंदितान्पुरुषापराधेन॥ इति। अवक्रीतं भाटकेनानीतं सर्वान्पुत्रादीन् अनिंदितान् निरपराधान् । अज्ञाननाशिते विशेषमाह व्यासः ।

किंचिन्न्यूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितं ।

मनुः ।

यो नार्पयति निक्षेपं यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं धनं ॥

अत्रैव श्लोके द्विगुणं दममिति मत्स्यपुराणे पाठः ।

स च दमः सधननिकृष्टाचारविषयः । मनुवचनं तु नि-र्धनसाचारविषयमिति मिश्राः। शिष्यमुपक्रम्य नारदः।

समावृतश्च गुरवे प्रदाय गुरुदक्षिणाम्।
प्रतीयात्स्वगृहानेषा शिष्यवृत्तिरुदाहृता ॥

तथा।

गृहीतशिल्पः समये कृत्वाचार्य्यप्रदक्षिणम्।
शक्तितश्चानुमान्यैनमंतेवासी निवर्त्तते ॥

बृहस्पतिः ।

कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृतेः ।
राज्ञा दापयितव्यः स्याद्विनयं चानुरूपतः ॥

तथा।

दासेनोढा त्वदासी या सापि दासीत्वमाप्नुयात्।
यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः ॥

दासीत्यत्र दासपदस्य स्वसंबंधितया तदुपस्थापित-स्वामिन एव दासी सापि। द्विविधा कस्याप्यदासी अन्य-दासी च पूर्वा दासोढत्वमात्रेणैव दासेश्वरदासी परा च तत्प्रभोरनुमतिसहकारेण अननुमता च न दासी एवं तुल्यन्यायेन कस्याप्यदासो यदि दासीं परिणयति तदा परिणेता दासीश्वरस्य दासो भवति । अन्यदासश्चेन्नेता तदा स्वेश्वरस्यानुमत्या दासीश्वरदासः। एवं च यदननु-मत्या दासः परदासीं परिणयति तदा स्वस्वस्वामिनोरेव दासदास्यौ तयोरपत्यं तु द्वाभ्यां विभज्यग्राह्यं तत्र दासी-पदं परोढादासीपरं। स्वयमूढायां तु दास्यां तथाविधा

यथस्य विभाज्यत्वमेवेति। स्मार्त्तमतमप्येवं। मनुः।

ओघवाताहृतं बीजं यस्य क्षेत्रे प्रजायते।
क्षेत्रिकस्यैव तद्बीजं न वप्ता फलमर्हति॥
एष धर्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च।
विहंगमहिषादीनां विज्ञेयः प्रसवं प्रति॥

याज्ञवल्क्यः।

मिथ्या वदन् परीमाणं शुल्कस्थानादपाक्रमन्।
दाप्यस्त्वष्टगुणं यश्च स व्याजक्रयविक्रयी॥

शुल्कस्थाने लोभेन पण्यपरिमाणं मिथ्या वदन् शुल्कस्थाने च शुल्कमदत्वा गच्छन् यश्च विक्रयकाले राज्ञे वंचनार्थं व्याजं कृत्वाऽकाले क्रयं विक्रयं वा करोति सोऽपहृतद्रव्यापेक्षयाष्टगुणं दंडं दाप्यः। शुल्कस्थानमगत्वैव विवर्त्मनान्यत्र गच्छति तदा सर्वापहारः। यथा विष्णुः॥ शुल्कस्थानमपक्रामन्सर्वापहारमवाप्नुयात्॥ मनुः।

क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत्
सोऽन्तर्दशाहे तद्द्रव्यं दद्याच्चैवाददीत वा॥
परेण तु दशाहस्य नादद्यान्नैव दापयेत्।
आददानोऽददच्चैव राज्ञा दंड्यः शतानि षट्॥

अनुशयोऽकरणमतिः। पश्चात्ताप इत्यन्ये। दद्यात्प्रत्यर्पयेत्। क्रेता विक्रेतरीति शेषः। आददीत विक्रेतेति शेषः। परेण दशाहस्य दशाहात् परं शतानि पणानां। नारदः।

क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतं मन्यते क्रयी।

विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् ॥
द्वितीयेऽह्नि ददत् क्रेता मूल्यात् त्रिंशांशमाहरेत् ।
द्विगुणं तत्तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥

यस्य त्र्यहपर्यंतं परीक्षणमुक्तं तत्रेदं। दशदिनादेःपरीक्षाकालत्वे प्रथमत्रिभागमध्ये यदि ददाति तदा हानिर्नास्ति तत्परतश्चेत्तदा त्रिंशांशपंचदशांशहानिस्तुल्यन्यायादायातीति नीतिकल्पे लक्ष्मीधरः। दोह्यादौ विशेषयति कात्यायनः।

क्रीत्वा चानुशयात् पण्यं त्यजेद्दोह्यादि यो नरः।
अदुष्टमेव काले तु स मूल्याद्दशमं हरेत् ॥

काले उत्कार्पणकाले हरेद्दद्यात्। इदं तु यत् क्रेत्रा न स्ववशीकृतं तत्परं। स्ववशीकृतपरं तु भविष्यद्वाक्यं यथा।

क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागतं ।
षड्भागं तत्र मूल्यस्य दत्वा क्रीतं त्यजेद्भृगुः ॥

सीमानिर्णये मृषासाक्षिणो दंडमाह मनुः।

यथोक्तेन नयंतस्ते पूयंते सत्यसाक्षिणः।
विपरीतं नयंतस्तु दाप्यास्ते द्विशतं दमं ॥

सत्यसाक्षिणःसत्यसाक्षिणः सत्यप्रधानाः सीमावोद्धारः द्विशतं पणानां। अत्र विशेषयति स एव।

सामंताश्चेन्मृषा ब्रूयुः सेतुं विवदतां नृणाम्।
सर्वे पृथक् पृथक् दंड्या राज्ञा मध्यमसाहसं ॥

सीमाचिह्ननिमित्तं विवदमानानां मनुष्याणां यदि सामंता देशवासिनो मिथ्या ब्रूयुस्तदा ते सर्वे प्रत्येकं राज्ञा

मध्यमसाहसं दंडनीयाः। एवं चासामंतरूपाणां पूर्वोक्तो द्विशतो दमो ज्ञेय इति कुल्लूकभट्टः। मनुः।

सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च।
दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च॥
वेणुवैणवभांडानां लवणानां तथैव च।
मृण्मयानां च हरणे मृदो भस्मन एव च॥
मत्स्यानां पक्षिणाञ्चैव तैलस्य च घृतस्य च।
मांसस्य मधुनश्चैव यच्चान्यत्पशुसंभवं॥
अन्येषामेवमादीनां मद्यानामोदनस्य च।
फलानाञ्चैव सर्वेषां हरणे द्विगुणो दमः॥
यश्चैतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः।
तं शतं दंडयेद्राजा यश्चाग्निं चोरयेद्गृहात्॥

उपक्लृप्तानि द्रव्याणि एतानि सूत्रादीनि उपभोगार्थं संस्कृतानि कार्यार्थं सन्निधापितानि वेत्यर्थः। नारदः।

सेतुश्च द्विविधः प्रोक्तः खेयो बन्ध्यस्तथैव च।
तोयप्रवर्तनात्खेयो बन्ध्यस्तोयाप्रवर्तनात्॥

तत्र व्यवस्थामाह स एव।

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते।
महागुणोऽल्पबाधश्चेद्वृद्धिरिष्टा क्षये सति॥

वृद्धिर्भूयसी क्षयोऽल्पीयानिति। तेन परक्षेत्रे परेण क्रियमाणसेतुर्यदा बहूपकारकः क्षेत्रस्वामिनश्चाल्पीयःक्षयकरस्तदासौ न प्रतिषेध्यः। यतोऽल्पक्षये बलवती वृद्धिः सर्वस्येष्टा भवतीत्यर्थः। याज्ञवल्क्यः।

स्वामिनो योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत् ।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥

क्षेत्रस्वाम्यनुमतिमनादाय तत्क्षेत्रे कृतस्य सेतोर्महिम्ना यः परेषां शस्याधिगमस्तत्र सेतुकर्ता न भागी किंतु क्षेत्रस्वामी तदभावे राजेत्यर्थः। कात्यायनः।

युक्तियुक्तं तु यो हन्याद्वक्तुर्योऽनवकाशदः ।
अयुक्तं चैव यो ब्रूयात्प्राप्नुयात् पूर्वसाहसं ॥

वक्तुरित्यादि वक्तुर्विरोधेनाजस्रं यो वक्तीत्यर्थः। यो ब्रूयात्कार्यचिन्तकेष्विति शेषः। राजप्रवर्तितधर्माननुपालने दंडमाह कात्यायनः।

राज्ञा प्रतिष्ठितान्धर्मान् यो नरो नानुपालयेत् ।
गर्ह्यः स पापो दंड्यस्तु लोपयन् राजशासनं ॥
अरुंतुदः सूचकश्च भेदकृत् साहसी तथा ।
श्रेणीपूगे नृपद्वेष्टा क्षिप्रं निर्वास्यते ततः ॥
एकपात्रेऽथवा पंक्त्यां संभोक्ता येन यो भवेत् ।
अकुर्वंस्तु तदा दंड्यस्तस्य दोषमदर्शयन् ॥

अरुंतुदो मर्मस्पृक् सूचकः पिशुनः। भोजनविरोधिनं दोषमदर्शयन् तं तथा अकुर्वाणो दंड्यः। बृहस्पतिः।

संभूयैकमतिं कृत्वा राजभागं हरंति ये ।
ते तदष्टगुणं दाप्या वणिजः प्रपलायिनः ॥

राजभागं राजदेयं। कात्यायनः।

गणमुद्दिश्य यत्किंचित् कृत्वर्णं भक्षितं भवेत् ।
आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेत् ॥

गणमुद्दिश्य गणप्रयोजनमभिधाय ऋणं कृत्वा यैः कैश्चिद्रक्षितं तैरेव देयं संशयो नेत्यर्थः । याज्ञवल्क्यः ।

अयोनौ गच्छतो योषां पुरुषं वापि हेतवः ।
चत्वारिंशत्पणो दंडस्तथा प्रव्रजितागमे ॥

अयोनौ स्त्रिया मुखादौ गच्छतः मेढ्रप्रवेशं कुर्वतः पुरुषं मेहतः अतिरागेण पुरुषमभिगच्छतः । शंखलिखितौ ॥ अदंड्यौ मातापितरौ स्नातकपुरोहितौ परिव्राजकवानप्रस्थौ जन्मकर्मश्रुतशीलशौचाचारवंतश्च एते हि धर्मप्रतिकरा राज्ञः स्त्रीबालवृद्धास्तपस्विनश्च तेभ्यः क्रोधं नियच्छेत् ॥ अस्यार्थः । जन्म शुद्धकुलता कर्म अग्निहोत्रादि श्रुतं वेदवेदांगगोचरं ज्ञानं शौचं बाह्यमाभ्यन्तरञ्च एतद्युक्ता एतेप्यदंड्याः यतस्ते राज्ञो धर्मप्रतिकराः षड्भागरूपधर्मार्जनेनोपकुर्वंति । कात्यायनः ।

आचार्यस्य पितुर्मातुर्बालकानां तथैव च ।
एतेषामपराधे तु दंडो नैव विधीयते ॥

यत्तु ।

ऋत्विक्पुरोहितामात्यपुत्रसंबंधिबांधवाः ।
धर्माद्विचलिता दंड्या निर्वास्या राजहिंसकाः ॥

इति याज्ञवल्क्यवचनं तद्वाग्दंडविषयं न त्वर्थदंडशारीरदंडाभिप्रायमिति चंडेश्वरः । बृहस्पतिः ।

गुरून्पुरोहितान् पूज्यान् वाग्दंडेनैव दंडयेत् ।
विवादिनो नरांश्चान्यान् पापिनो ऽर्थेन दंडयेत् ॥
महापराधयुक्तांश्च वधदंडेन शासयेत् ।

तपस्विनां तु धिग्दंडमाह कात्यायनः ।

मित्रादिषु प्रयुंजीत वाग्दंडं धिक्तपस्विनां ।
यथोक्तं तस्य तत्कुर्यादनुक्तं साधुकल्पितं ॥

बृहस्पतिः ।

महापातकयुक्तो ऽपि न विप्रो वधमर्हति ।
निर्वासनांकने मौण्ड्यं तस्य कुर्यान्नराधिपः ॥

महापातकिनमाह मनुः ।

ब्रह्महा च सुरापी च तस्करो गुरुतल्पगः ।
एते सर्वे पृथग्ज्ञेया महापातकिनो नराः ॥
गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये तु श्वपदं कार्यं ब्रह्महन्यशिराः पुमान् ॥
अंक्या राज्ञा ललाटेषु दाप्यास्तूत्तमसाहसम् ।

इति मनुवचनैकवाक्यत्वाल्ललाटमेवांकनस्थानमवगम्यते । तत्र गुरुपत्नीगमने यावज्जीवस्थायी तप्तलोहेन ललाटे भगाकृति गुरुपत्नीगमनचिह्नं कार्यं । एवं सुरापाने कृते पातुर्दीर्घसुराध्वजाकारं । सुवर्णापहारे तत्कर्तुः कुक्कुरपदचिह्नरूपं कार्यं ब्रह्महनि कबंधः पुमान् कार्य इत्यर्थ इति कुल्लूकभट्टः । विष्णुः ॥ नियमातिक्रामिणं ब्राह्मणमन्यं वा रहसि चारयेत् । आ समापत्तेरसमापत्तौ नास्यः ॥ नियमातिक्रमिणं विहितस्याकर्तारं अन्यमकृत्यकारिणं ब्राह्मणं रहस्यस्थाने बन्धयेत् । आ समापत्तेः यावदेवं न करिष्यामीति तस्य संप्रतिपत्तिर्भवति । असमापत्तौ असंप्रतिपत्तौ नास्यो निर्वास्य इत्यर्थः । महापातकिनो धन-

मयाह्यमित्याह मनुः ।

नाददीत नृपः साधुर्महापातकिनो धनम् ।
आददानस्तु तल्लोभात्तेनाधर्मेण लिप्यते ॥
अप्सु प्रवेश्य तं दंडं वरुणायोपकल्पयेत् ।
श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत् ॥
ईशः सर्वस्य वरुणो राज्ञां दंडधरो हि सः ।
ईशः सर्वस्य जगतो ब्राह्मणो वेदपारगः ॥
यत्र वर्जयते राजा पापकृद्भ्यो धनागमं ।
तत्र कालेन जायंते मानवा दीर्घजीविनः ॥
निष्पद्यंते च सस्यानि यथोक्तानि कृषीवलैः ।
बालाश्च न प्रमीयंते विकृतं न च जायते ॥

धार्मिको राजा महापातकिसंबंधिदंडधनं न गृह्णीयात् लोभात्पुनः स तद्गृह्णन् महापातकदोषेण संबध्यते। किं तर्हि तद्धनं कुर्यादत आह। तत् दंडधनं आदाय जले प्रक्षिप्य वरुणाय दद्यात् श्रुतवृत्तसम्पन्नाय ब्राह्मणाय वा दद्यात् महापातकिदंडधनस्य वरुणः स्वामी यस्मात् राज्ञामपि दंडधारित्वात् प्रभुः । तथा च ब्राह्मणः समस्तवेदाध्यायी सर्वस्य जगतः प्रभुः अतः प्रभुत्वात् तौ दंडमर्हतः । यत्र देशे प्रणतं महापातकिधनं राजा न गृह्णाति तत्र परिपूर्णकालेन मनुष्या उत्पद्यंते दीर्घायुषश्च वैश्यानाञ्च यथैव धान्यादिशस्यानि उत्पन्नानि तथैव पृथक् स्वकाले निष्पद्यंते न च बालाः केचिन्म्रियंते दीर्घजीविनः इत्यस्यादरार्थं बालानां पुनर्वचनं व्यंगं च न किंचित्कृत-

मुत्पद्यते इत्यर्थः। 'अधिको द्रविणाधिके' इति प्रागुक्तवचनात् धनवतः प्रोक्तदंडापेक्षयाधिकदंडोऽपि कार्यः। स चेह भयजनको विवक्षितः। येन स्वधर्मत्यागो न स्यात्॥ तथा च दंडमुपक्रम्य मनुः।

तस्य सर्वाणि भूतानि स्थावराणि चराणि च।
भयाद्भोगाय कल्पंते स्वधर्मान्न चलंति च॥

तस्य दंडस्य। तथा।

यश्चापि धर्मसमयात्प्रच्युतो धर्मजीविनः।
दंडेनैव समाप्रोषेत् स्वकाद्धर्माद्विधिच्युतं॥

समयः शास्त्रमर्यादा धर्मजीविनो ब्राह्मणादयः आप्रोषेत् पीडयेदिति यावत्। याज्ञवल्क्यः।

अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषं।
षोडशैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य तु॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत्।
द्विगुणं वा चतुःषष्टिस्तद्दोषगुणविद्धि सः।

अष्टापाद्यमित्यस्याष्टभिरापाद्यते गुण्यते इत्यष्टापाद्यमष्टगुणं किल्बिषं दंडरूपधनं। तद्दोषगुणविदिति सर्वत्रान्वितं। तेन यत्र स्तेये यो दंड उक्तः सः स्तेयदोषगुणज्ञस्य शूद्रस्याष्टगुणः तादृशवैश्यस्य षोडशगुणः तादृशक्षत्रियस्य द्वात्रिंशद्गुणः तादृशब्राह्मणस्य चतुःषष्टिगुणः ततोऽप्यगुणब्राह्मणस्य शतगुणं ततोप्यधिकस्य ब्राह्मणस्याष्टाविंशत्यधिकं शतमित्यर्थः इति रत्नाकरादयः। मनुः॥

स्तेनाः सुरापा ब्रह्मघ्ना गुरुदाराभिगामिनः।
न संति यस्य राष्ट्रेषु स राजा शक्रलोकभाक्॥
अनेन विधिना राजा मिथ्याविवदतां नृणां।
साक्षिप्रत्ययसिद्धानि कार्याणि समतां नयेत्॥
उदितो विस्तरेणायं मिथ्याविवदमानयोः।
अष्टादशसु मार्गेषु व्यवहारविनिर्णयः॥
एवं कार्याणि सर्वाणि पश्यन्सम्यङ्महीपतिः।
देशानलब्धानीप्सेत लब्धांश्च परिपालयेत्॥
बालेश्वरकृपारामसमगोपालकृष्णजीवनाख्यैः।
बारेश्वरकृष्णचंद्रश्रीगौरीकान्ताभिधानैः सद्भिः॥
कालशङ्करश्यामसुन्दरकृष्णकेशवसङ्गैः।
सीतारामसंगैश्च कृतो ग्रन्थः स्फुरतु सभायां॥
इत्यनेकविषयवासिविद्वद्वृन्दोपवर्णितः।
विवादार्णवसेत्वाख्यो ग्रंथः सम्पूर्णतां गतः॥

इति विवादार्णवसेतुः संपूर्णः

---

सोऽयं ग्रन्थः श्रीमति 'मुंबयी' नगरे श्रीकृष्णदासात्मजाभ्यां गंगाविष्णु, खेमराजगुप्ताभ्यां अंकनात्पूर्वं परशुरामात्मजगोविंदशास्त्रितः घघवेइत्युपनामकपरशुरामशास्त्रितश्च संशोध्य मुद्रणावसरे च उद्धवशास्त्रितः दिवाकरशास्त्रितश्च संशोध्य स्वकीये 'श्रीवेङ्कटेश्वराख्ये' मुद्रणालये संमुद्राप्य न्यायकार्यप्रतिकार्यान्याय्यप्रातिहार्यनार्यकार्यप्रतिक्षणसंधुक्षणचञ्चादराणां राजकार्यपारंपर्यनिर्वाहिकानां सज्जनानां हस्तदण्ड इवाखंडविवादव्यापादनालंकर्मीणः प्रकाशमनायि ॥

॥ समाप्तः ॥



इदं पुस्तकं-वैष्णवसंप्रदायान्तर्गत-वि-
ष्णुस्वामिमतानुयायिश्रीनारायणकुलोद्भव-
पण्डितमधुसूदनगोस्वामिदानाध्यक्षभूतपूर्व-
पञ्जाबकेसरिभिः श्री १०८ महाराजाधिराज
रणजीतसिंहद्वारा संगृहीतात्-तत्सुश्री-दे-
वीप्रसाद गोस्वामी तनूज पण्डित ज्वालादत्त
प्रसद गोस्वामि संरक्षितात्--**मधुसूदन
पुस्तकालयात्**- पण्डितज्वालादत्तप्र-
सादगोस्वामिसकाशाल्लब्धम् । तच्चास्मा-
भिर्महादरपूर्वकं तेभ्यः संलभ्य मुद्रितम् । अ-
स्य संमुद्रणे सर्वलोकोपकारकतया तेषां महो-
पकाराञ्छिरसोररीकुर्मः ।

# सूचीपत्र

## धर्मशास्त्रग्रंथाः

| नाम | कि० रु. | आ. | ट. आ. |
|---|---|---|---|
| मनुस्मृति सटीक जिल्द बंधी … | २ | ८ | ४ |
| याज्ञवल्क्यस्मृति मिताक्षरासहित | ३ | | ७ |
| अष्टादशस्मृति … … | २ | ८ | ४ |
| पंचस्मृति … … … | ० | ४ | ॥ |
| बृहत्पाराशरस्मृति … … | १ | ८ | ३ |
| निर्णयसिंधु … … | २ | ८ | ६ |
| धर्मसिंधु … … … | २ | ८ | ५ |
| धर्मसिंधु … … … | २ | ० | ४ |
| व्रतराज अतिउत्तमटिप्पणसहित | ५ | ० | १० |
| तिथिनिर्णय … … | ० | २ | ॥ |
| प्रायश्चित्तेंदुशेखर … … | ० | १० | १॥ |
| प्रायश्चित्तमंजरी … … | ० | ६ | १ |
| आशौचनिर्णय … … | ० | १ | ॥ |
| शूद्रकमलाकर … … | ० | १२ | २ |
| क्षौरनिर्णय … … | ० | १॥ | ॥ |
| क्षौरनिर्णयसटीक … … | ० | ४ | ॥ |
| शांतिमयूख … … | १ | ० | २ |
| श्राद्धमयूख … | १ | ० | २ |
| प्रपंचसारविवेक … … | १ | ० | २ |
| भवाब्धिसेतु भाषाटीकासहित | ० | १२ | २ |